


आचार्य्यगोविन्दविरचितेन भाष्येण सहितम् ।

सम्पादकः

डा. बन्नञ्जेपदोपाह्वः आचार्य्यगोविन्दः

विद्यावाचस्पतिः, विद्यारत्नाकरः,

पद्मश्रीपदभाक्

प्रकाशनी

तत्वसंशोधनसंसत्

विद्यामान्यप्रकाशनम्

श्रीहृषीकेशतीर्थसंस्थानम्, रजतपीठपुरम् (उडुपि)



PRĀṆĀGNI-SŪKTA and PRĀṆĀSŪKTA of ATHRVA-VEDA: with the commentaries of Dr. Bannanje Govindācārya

Edited by : Dr. Bannañje Govindācārya
Padmashree, Vidyaratnakara, Vidyavacaspati

Published by : Tatva-Samśodhana-Samsat
Śrī Vidyāmānya Prakāśana
Śrī Hṛṣīkeśa-Tīrtha-Samsthānam,
(Śrī Palimāru Maṭha) Uḍupi,,
Karnataka, (India)
Tel. no: 0820-2523402



| | | |
|---|---|---|
| 2nd Edition (Revised) | : | 2011 |
| Copies | : | 500 |
| Pages | : | 10+92 |
| Price | : | Rs-50 |

| | | |
|---|---|---|
| Cover design | : | K.M. Sheshagiri |
| Typeset | : | Kaddi S. Badarinarayanachar<br>Poornaprajna vidyapeetha<br>E-Mail : bnkaddi@gmail.com |
| Printed at | : | Rajaprakash Printes<br>No. 142, I main road , Chamarajpet,<br>Bangalore -560 018<br>Tel. (080) 26521515 |

# आशिषः

**[प्रथममुद्रणावसरे गुरुभिर्दत्तमाशीर्वचनम्]**

श्रद्धालुभिर्माध्वैस्तावत् बळित्थासूक्तं स्वगुरुतममध्वमहिमातिशय-प्रतिपादकमिति विस्रम्भेण नित्यपठनीयतां नीतम् ।

स्वप्रतिपादकमिदं सूक्तं लोकगुरुणा श्रीमदानन्दतीर्थभगवत्पादेन स्वयमेव च व्याख्यातम् । दशप्रमतिरिति वैदिकनाम्ना विभूषितेन तेन अस्य सूक्तस्य हनुमद्भीममध्वात्मकरूपत्रयपरताप्रकाशकोऽर्थः सप्रमाणोदाहरणं स्वकृतोपनिषद्भाष्यादिषु स्फुटं प्रकटितः ।

अधुना विद्वद्वरेण्येन प्रवक्तृप्रबर्हेण बन्नञ्जेपदोपाह्वेन श्रीमता आचार्य-गोविन्देन अग्निप्राणाग्निनारायणाग्निपरतयाऽपि सूक्तस्यास्य भाष्यं विरचय्य, स्वं प्रकटितानुपमवैदुष्येण, सूक्तं च भाष्यभूषणेन शोभा-तिशयं नीतमिति विज्ञाय महानन्दसम्भृतचेतसः स्मः ।

बन्नञ्जेभाष्यमिदं श्रीमदानन्दतीर्थकृतभाष्यस्थप्रमाणसंवादितं तत्रतत्र प्राचीनव्याख्यासमुद्धरणसमलङ्कृतं च सत् प्रेक्षावद्भिरत्युपादेयता-मर्हतीत्यत्र नास्ति विचिकित्सा । तदिदं प्रकाशितं भाष्यं मध्वमाधव-योर्वचनप्रसूनमालात्वेन समर्प्यते, प्रार्थ्यते च गुरुतमभगवत्तमयो-र्विशेषानुग्रह आचार्यगोविन्दे ।



ऋग्वेदीयनवममण्डलस्थपवमानसूक्तानामपि एतदुपमं प्रमाण-संवादितं हरिमध्वभक्तिप्रचोदकं विद्वन्मोदकं तारतम्योपेतबहुदेवता-परं 'बन्नञ्जेभाष्यं' शीघ्रं प्रकाशं प्राप्नुयादित्याशास्महे ।

**इति नारायणस्मृतयः**

**श्रीविद्यामान्यतीर्थश्रीपादाः**

**श्रीफलिमारु–भण्डारकेरि उभयमठाधीशाः**

**रजतपीठपुरम्**
(उडुपि)
१९९४

## संसदियं कृतज्ञतामर्पयति

गहनार्थस्य प्राणाग्निसूक्तस्य, आथर्वणस्य प्राणसूक्तस्य च मनोज्ञं भाष्यं प्रणीय, सम्पाद्य च बुभुत्सूनाममत्सराणां कृतोपकाराय विद्वदग्रण्ये श्रीमते पद्मश्रीप्रशस्तिभाजनाय डा. बन्नञ्जेपदोपाह्वाय आचार्यगोविन्दाय।

गणकयन्त्रद्वारा लिपिमुद्राङ्कनेन निर्व्याजमुपकृतवते विपश्चिते श्रीमते कड्डीपदोपाह्वाय बदरीनारायणाचार्याय।

अक्षरशोधनकर्मणि सहकृतवते श्रीमते विजयसिंहाय कृष्णराजाय च।

पुस्तकस्यास्य मुखपत्रविन्यासकर्मणि दर्शितकौशलाय चित्रकलापरिणताय श्रीमते के. एम्. शेषगिरिशर्मणे ।

मनोज्ञमुद्रणकर्मणि कृतसहकाराय 'राज्प्रकाश् प्रिण्ट्स्' मुद्रणालयाधिकृताय श्रीमते श्रीप्रकाशाय।

ग्रन्थमेतं क्रीत्वा पिपठिषुभ्यः सर्वेभ्यश्च सहृदयेभ्यः ।

रजतपीठपुरम् (उडुपि)<br>शा.श.१९३३, खरसंवत्,वै.शु.त्रयोदशी<br>[15.4.2011]

**तत्वसंशोधनसंसत्**<br>**श्रीहृषीकेशतीर्थसंस्थानम्**<br>**श्रीपलिमारुमठः**



# किञ्चिदादौ वक्तव्यम्

**[प्रथममुद्रणपीठिका]**

तदिदं प्राणाग्निसूक्तभाष्यं समग्रं बुभुत्सूनामिदमुपज्ञमुपस्थाप्यते । तत्र प्रास्ताविकं तु किञ्चिद् वक्तव्यम् ।

नन्वग्निसूक्तमिदम्। तत् किमिति महता कण्ठेन प्राणाग्निसूक्तमिति नवीनतर-मुत्प्रेक्ष्यते।

सोऽयं प्रेक्षावतां पन्था यदुत्प्रेक्षन्ते। गिरिशिखरे कृतपदानां यत् परिस्फुटं न तद् गिरितटे परिलुठतामुद्ग्रीवाणामपि । सत्यमाह यास्कः—'नैष स्थाणोरपराधः यदेनमन्धो न पश्यति' इति।

अपिधाय चक्षुषी न शक्यं द्रष्टुम्। उन्मीलितचक्षुषाऽपि न शक्यं द्रष्टुं यदि वस्तु तमसि निलीनम्। अथ विवृते चक्षुषी, अपगतं च तमः, अथापि न शक्यं द्रष्टुं यदि नास्ति दिदृक्षा। सुन्दरमुक्तं टीकाकृत्पादैः—'यो हि यत्राऽदरवान् तस्यैव तद्वस्तु विद्यमानमपि स्फुरति। नह्यत्रानादरवतः अन्यत्राऽदरवतश्च' इति। न केवलमेतावत्। यो हि यत्राऽदारवान् तस्य तदेव स्फुरत्यविद्यमानमपि।

यद्यस्ति प्रदीपप्रकाशः, अस्ति च विवृतं हृदयम्, अपि च स्त एवोन्मीलिते नयने तदा निर्विचिकित्सं निश्चीयेत प्राणाग्निसूक्तमेतदिति।

अग्निसूक्तानि सर्वाण्यप्यध्यात्मं प्राणसूक्तानि भवन्ति। अत एव 'प्राणाग्नय एवै-तस्मिन् पुरे जाग्रति' इति व्यपदिशति श्रुतिः। अपि चाग्नौ वायावादित्ये चेति त्रिषु स्थानेष्वधिष्ठितः प्राण एव हि भगवतो मुख्यमधिष्ठानम्।

निर्वचनसाम्याच्चैतदेवम्। कथमग्निः? अगं नयतीत्यङ्गं वा नयतीति। कथं प्राणः? प्रणयतीति प्राणयतीति वा। तदिमे अन्तत एकार्थे पदे।

तत्रापि दैर्घतमसमिदं सूक्तमादौ भृगुणा दृष्टम्। यदा भृगुर्ददर्श प्राणाग्निदेवत्यं ददर्श। ततश्च विशिष्य प्राणस्यावतारत्रयं संस्तावयत् प्राणाग्निसूक्तमुच्यते। वस्तुतस्तु समानमेतत् सर्वेषामग्निसूक्तानां प्राणो देवतेति।

तथाचैतत्सूक्तपर्यालोचनया शृङ्गग्राहिकतया सुकरं शक्यमवगन्तुमन्येषामप्यग्निसूक्तानां मुख्यतः प्राणपरता। अन्ततश्च नारायणपरता। तेन 'त्रयोऽर्थाः सर्ववेदेषु' इति प्रमाणवचनमप्यनुगतं भवति।

त्रयोऽर्था इति चायोगव्यवच्छेद एव। त्र्यवरा इत्येवार्थः। अधिकाश्च यथायोगं यथाधिकारं भवन्ति। 'कश्छन्दसां योगमावेद धीरः'? ततश्च त्रय इति न्यूनभावमेव न्यवच्छिनत्ति नाधिकभावम्। अत एव महार्थे नीराजने पावमानीष्वृक्षु सर्वत्र चतुरवरा एवार्थाः। सोमपरो मनःपरः प्राणपरो नारायणपरश्चेति। सोम इति चन्द्रमाः। मन इत्या चन्द्रमसमा गरुडशेषरुद्रेभ्यः। प्राण इति ब्रह्मवायू। ततो मुख्यतमवृत्त्या नारायण इति सर्वमवदातम्।

स्वयं भगवत्पाद एवास्य सूक्तरत्नस्य तत्रतत्रार्थविशेषमाविश्चकार। टीकाकाराश्च बहवः। किन्तु खण्डशः प्रासङ्गिकतया च। विशिष्य च प्रथमवर्गस्य। न क्वापि द्वितीयवर्गस्य। समग्रमपि सूक्तं तदनुसारेण प्राणपरमुन्नेतुं शक्यं कृतसञ्चरणानां वेदविद्यापद्यासु, अभिज्ञानां चौपनिषदनिरुक्तविज्ञानानाम्। अथापि सूक्ते प्रतिमन्त्रं प्राणप्रवणमर्थविशेषं विविदिषतां स्फुटमवबोधायेदं प्रयतनम्।

यद्यपि सायणमाधवीयादिकं समग्रमप्यस्ति व्याख्यानम्। समग्रमप्यसमग्रमिव तत्। यत् कर्मकाण्डे केवलमकाण्डताण्डवं तत्। न वयं ब्रूमो न वेदाः कर्मपरा इति। न कर्मपरमा इति तु ब्रूमः। सायणादयः सर्वेऽपि परितश्चत्वरं परिचरन्ति। न गर्भगृहं प्रविविक्षन्ति प्रविवक्षन्ति वा मन्त्रहृदयम्। बहुभिरर्थैर्गर्भिणी भगवद्गुणदोहदा भवति श्रुतिवधूः। कस्तस्या आन्तरं दोहदमवगन्तुमीष्टे भगवत ऋते। 'मां विधत्तेऽभिधत्ते माम्' इति भागवतोक्तं श्रुतिवधूहृदयं किञ्चिदिवान्वेष्टुमयं प्रयत्नः।



सायणोऽपि निघण्टुनिरुक्तादिकमनुसृत्यैव व्याख्याति। अथापि नातीव हृदयङ्गमम्। प्रायो बहिर्मुखम्। तत्रापि नातीव स्वरसम्। तथाहि प्रथममन्त्रं विवृण्वन् वक्ति– 'बट् इत्था इत्युभे अपि सत्यनामनी' इति। अयमिह तदभिमतोऽर्थः– 'देवस्याग्नेः भर्गस्तेजः सर्वैरपि धायि धार्यत इत्येतत् बट् इत्था इत्थमेव सत्यमेव' इति। आम्रेडितं तु भवति। 'सत्यं सत्यं पुनः सत्यम्' इतिवद् व्याख्येयम्। नैतद् युक्तं भवति यद्यपुनरुक्ततया शक्यं व्याख्यातुम्। बट् बलरूपमिति सम्भवति स्वरससुन्दरेऽर्थे कुतोऽयमर्थरोमन्थः?

'पृक्षो वपुः' इति पदयोस्तु दयनीयो विवरणप्रयासः। पृक्ष इत्यन्ननामसु निघण्टौ पठ्यते। सायणस्तु भणति– पाकादिनाऽन्नसाधकः पृक्ष इति। वपुरिति च वपुष्मानिति। तदपि शरीराभिवृद्धिहेतुतयेति परम्परया लाक्षणिकमर्थमाह। मुख्यवृत्तेरसम्भवे किल लक्षणा पादं निक्षिपति। पूर्वमन्त्रे वपुष इत्यस्य शरीरपोषायेत्यर्थमाह। अत्र च वपुष्मानिति। एकप्रकरणपठितस्य सम्भवत्येकार्थत्वे न भिन्नार्थता स्वरसा।

तृतीयमन्त्रे च 'यद् यस्मात् एनमग्निं सूरयः निःक्रन्त निष्पादयन्ति यद् यस्माच्च एनमग्निं मातरिश्वा मथायति उद्बोधयति' इतीयदेव मन्त्रे श्रूयते। 'यस्मादेवंरूपस्तस्मात् स्तोतव्यः' इत्यध्याहारेण यथाकथाच मन्त्रयोजना न जातु चित्तमावर्जयति। विनाऽमुख्यार्थस्वीकारं विना चाध्याहारमर्थव्याकरणपरिपाटी त्वस्माभिरत्र भाष्ये बहुधा प्रदर्शिता।

महानयमनुग्रहो यदस्मद्विद्यागुरवः श्रीफलिमारुमठाधीशाः श्रीविद्यामान्यतीर्थश्रीपादाः स्वयमिदं प्राणाग्निसूक्तभाष्यं प्राकाशयन्निति। असमर्थः प्रतिकर्तुं भूयिष्ठां नमउक्तिं तेभ्यः प्रतिहरामि।

**—बन्नञ्जे गोविन्दाचार्यः**

# द्वितीयमुद्रणभूमिका

अस्य प्राणाग्निसूक्तस्य प्रथममुद्रणे केवलं प्राणाग्निसूक्तं सभाष्यं प्राकाश्यमनीयत । अस्मिन् मुद्रणे पुनः सुलभबोधाय सङ्ग्रहभाष्यमपि समयोजि । तथा श्रीमध्वविजये श्रीमहाभारततात्पर्यनिर्णये ये प्राणमन्त्राः समुद्धृताः, तेषां तत्र तत्प्रसङ्गानुगुणं यद् व्याख्यानं मया व्यरचि तदप्यत्र संयोज्य मुद्रितम् । एकत्र सर्वेषां प्राणसूक्तगतानां मन्त्राणामर्थ-विशेषानुसन्धानं यथा स्यादिति ।

अपिच किमप्यपूर्वं संयोजनं चात्र भवति । षट्प्रश्नोपनिषदि द्वितीयप्रश्नान्ते देवैः कृता नवर्चा प्राणस्तुतिरनुपमा पठ्यते । साऽप्यत्र सव्याख्या मुद्रिता । अपरं षड्विंशत्यृचं प्राणसूक्तमत्यपूर्वमथर्ववेदे पठ्यते । तदपीदमुपज्ञं सव्याख्यानमत्र प्रकट्यकारि ।

महदिदं च नः प्रमोदस्थानम्, यद्धरिपदङ्गतानां मम विद्यागुरूणां श्रीविद्यामान्यतीर्थश्रीचरणानां दशमाराधनमहोत्सवस्य समय एव तेषामतिप्रियमिदं पुस्तकं प्रकाश्यत इति । तत्रापि तेषां श्रीपादानां प्रियशिष्येण श्रीहृषीकेशतीर्थसंस्थानमधिरूढेन कृतिना सुकृतिना श्रीविद्याधीशतीर्थश्रीपादेनेदं श्रीविद्यामान्यतीर्थप्रकाशन एव प्रकाश्यत इति हेम्नः परमामोदः ।

सर्वेभ्यो महद्भ्यो नमावोकं प्रशास्महे ।

**—डा । बन्नञ्जे गोविन्दाचार्यः**





**प्रणतवान् प्राणिनां प्राणभूतं**
**प्रणतिभिः प्रीणये पूर्णबोधम् ॥**

# प्राणाग्निसूक्तम्

## आचार्यगोविन्दप्रणीतं भाष्यम्
## सङ्ग्रहभाष्यं च



**ॐ ॥ प्राणनाथं प्रणम्याथ प्राणाग्निं पञ्चरूपिणम् ।**
**मृष्टं महार्थप्राणाग्निसूक्तभाष्यं वितन्यते ॥**

त्रयोदशर्चं सूक्तं वर्गद्वयात्मकम् । प्रथमे पञ्च मन्त्राः प्रथमो वर्गः । अष्टौ द्वितीयः । प्रथममण्डले एकविंशोऽनुवाके द्वितीयं सूक्तम् । द्वितीये चाष्टके द्वितीयाध्यायेऽष्टमो नवमश्च वर्गौ । आदित एकचत्वारिंशदधिकशततमं सूक्तम् ।

भृगुर्वरुणपुत्र ऋषिः । आदित एकादश मन्त्रा जागताः । द्वावन्त्यौ त्रैष्टुभौ । वारुणी सर्वदेवस्त्रियश्च जगतीदेवताः । शची त्रिष्टुभः । 'विश्वान् देवान् जगत्या विवेश' इति, 'इन्द्रस्य त्रिष्टुबिह भागः' (ऋ.१०.१३०.५) इति च श्रुतिः । 'जगती चैव वारुणी', 'जगत्यश्च सर्वदेवस्त्रियो मताः', 'इन्द्राणी त्रिष्टुप्' इति च भगवत्पादवचनम् । पञ्चात्मा प्राणाग्निर्देवता । तथाहि तन्त्रसारसङ्ग्रहे–'बळाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते' (४.६५) इति ।

ननु नेदं भृगुदृष्टमिति सम्भवति । शतर्चिना हीदं दीर्घतमसा दृष्टम् । तथाह्याह बृहद्देवतायां शौनकः–

'द्वावुचथ्यबृहस्पती ऋषिपुत्रौ बभूवतुः ।
'आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥

'तां कनीयान् बृहस्पतिर्मैथुनायोपचक्रमे ।
'शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यभाषत ॥

'इहास्मि पूर्वसम्भूतो न कार्यः शुक्रसङ्करः ।
'तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः ॥

‘स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति ।
‘स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥
‘स जातोऽभ्यतपद् देवानकस्मादन्धतां गतः ।
‘ददुर्देवास्तु तन्नेत्रे ततोऽनन्धो बभूव सः ।
‘तं ‘वेदिषद’ इत्यस्तौच्चतुर्भिर्जातवेदसम्’ इत्यादि ( ४.११-१६ ) ॥

‘वेदिषदे प्रियधामाय सुद्युते’ इत्यादि प्राणाग्निसूक्तात् पूर्वतनमेकविंशानुवाके प्रथमं सूक्तम् ।

ऋषिपुत्रावित्यङ्गिरसः पुत्रौ । तथाहि भागवते—

‘श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः ।
‘सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा ॥
‘तत्पुत्रावपरावास्तां ख्यातौ स्वारोचिषान्तरे ।
‘उचथ्यो भगवान् साक्षाद् ब्रह्मिष्ठश्च बृहस्पतिः’ इति (४.१.३४–५) ॥

श्रद्धा च कपिलसोदरी कर्दमात् देवहूत्यां जाता नवस्वेका । एवं स्थिते कथं भृगुणा दृष्टमिति? संहिताध्ययनसम्प्रदायतश्चैतत् सिद्धम् ।

सत्यं सूक्तमिदं दीर्घतमसा दृष्टमिति । न दीर्घतमसैव दृष्टम् । दीर्घतमसा च दृष्टम् । भृगुणा च दृष्टम् ।

पुरा पितामहेन भृगुणा दृष्टानेव मन्त्रान् पश्चात् दीर्घतमा अप्यनुवाकमध्ये ददर्श । नव हि ब्रह्मर्षयः स्मर्यन्ते— मरीचिरत्रिरङ्गिराः पुलस्त्यः पुलहः क्रतुः वसिष्ठोऽथर्वा भृगुश्चेति । कर्दमसुताश्च नवैतेषां पत्न्यः । ब्रह्मपुत्रोऽयं भृगुः पश्चाद् वरुणपुत्रतया जातः । यथा वसिष्ठः ।

तथाच पूर्वं द्रष्टारमपहाय पाश्चात्यस्य ग्रहणे कारणाभावान्मन्त्रजपेषु भृगुरेवर्षित्वेन स्मर्यते । वेदपाठे तु पाश्चात्योऽनुवाकद्रष्टा दीर्घतमा इति व्यवस्था । तद्यथा काण्वसंहितान्ते पठिता याज्ञीयमन्त्रोपनिषद् दधीचाऽऽथर्वणेन दृष्टेति सम्पाठे पठिताऽपि स्वायम्भुवमनुदृष्टेति भागवते पठ्यते । प्रथमं मनुना दृष्टा । पश्चाद्



दधीचाऽऽथर्वणेनापि । अथर्वा हि भृगुभ्राता । तत्पुत्रो दध्यङ् । मनुसुता देवहूतिः कर्दमजाया । तत्सुता शान्तिः । तस्यामथर्वणा जातः ।

कथमथ प्राणाग्निर्देवता? ‘चतुर्भिर्जातवेदसम्’ इति हि शौनकः । सत्यम्, न वयमब्रूम नाग्निर्देवतेति । नापि शौनकोऽब्रवीन्न प्राणो देवतेति । अग्निरपि देवता । प्राणोऽपि देवता । अग्निरिति जातवेदा इति प्राण एव हि मुख्यत उच्यते । नारायणश्च परममुख्यतः ।

‘अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः’ इति हि गीतासु ।

‘प्राणाग्नय एवैतस्मिन् पुरे जाग्रति गार्हपत्यो हवा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते प्रणयनादाहवनीयः प्राणः’ इत्याद्या च श्रुतिः । ‘वैश्वानरः साधारणशब्दविशेषात्’, ‘अत एव प्राणः’ इत्यादि च सूत्रम् ।

तथाचेयं व्यवस्था— पञ्चात्मा नारायणस्तावत् सर्वेषामग्निसूक्तानां परममुख्यार्थः । ततः पञ्चात्मा प्राणः । तदनु च पञ्चाग्नय इति ॥

तदेवं पञ्चरूपप्रतिपादकः पञ्चमन्त्रः प्रथमो वर्गः—

**ॐ॥ बळि॒त्थातद्वपु॑षेधायिदर्श॒तन्दे॒वस्य॒भर्ग॒स्सह॑सो॒यतो॒जनि॑ ।**
**यदी॒मुप॒ह्वर॑ते॒साध॑तेम॒तिरृ॒तस्य॒धेना॑ऽअनयन्तस॒स्रुतः॑ ॥ १ ॥**

**बट् । इ॒त्था । तत् । वपु॑षे । धा॒यि॒ । द॒र्श॒तम् । दे॒वस्य॑ । भर्गः॑ । सह॑सः । यतः॑ । जनि॑ ॥ यत् । ई॒म् । उप॑ । ह्वर॑ते । साध॑ते । म॒तिः । ऋ॒तस्य॑ । धेनाः॑ । अ॒न॒य॒न्त॒ । स॒+स्रुतः॑ ॥ १ ॥**

यतः सहसो देवस्याग्नेः सकाशात्, अग्निप्रतीक इति यावत् । भर्गः नारायणाख्यं ज्योतिरजनि । भूस्थाने ह्यग्निप्रतीको भगवान् । तदग्नितत्वं बट् बलरूपं दर्शतं दर्शनीयं च । तदेवाग्र्याख्यं ज्योतिः इत्था इत्थमेव, यथा बाह्ये तथा बलाद्यात्मकं सत् । वपुषे देहदार्ढ्याय च जठरे न्यधायि । यतो नारायणस्य वा देवस्य सकाशाद् भर्गोऽग्र्याख्यं ज्योतिरजनि । यदीं यदिदमग्र्याख्यं ज्योतिर्यजमानप्रत्तं हविः

गृहीत्वा देवानुप ह्वरत उपगच्छति। 'ह्वृ कौटिल्ये वरणे च'। साधयति च यजमानस्याभीष्टम्। स्वयं च ज्ञानरूपत्वान्मतिः। तदेव स्फुटमाह– ऋतस्य बाह्वृच्याख्यस्य धेना मन्त्ररूपा वाचः येनानयन्त प्राणीयन्त। 'अग्नेर्ऋग्वेदः' इति श्रुतेः। ऋतस्य धेना वा यज्ज्योतिः प्रणयन्ति। मन्त्रैः स्तुतो ह्यग्निः प्रसन्नो हविर्देवान् प्रणयति मन्त्रपूर्वमेव च तं मथनेन प्रणयन्ति। अमन्त्रं मथनेन जड एवाग्निर्जायते। न मतिरूपः। धेनेति वाक्पर्यायो निघण्टौ पठ्यते–'धेनाः। ग्नाः। विपा। नना। कशा। धिषणा। नौः। अक्षरम्। मही। अदितिः। शची। वाक्' इति। कीदृश्यो धेनाः? अतिशयेन स्रवन्तीति सस्रुतोऽमृतस्रवाः॥ ✻॥

अथ प्राणः। यतः यस्माद् भगवतः स्वयं जनि अजनि। शक्यं स्वीकर्तुमजनीत्यपि पदपाठः। अयोगव्यवच्छेदाय किल पदानि पठन्ति। नहि प्रतृण्णमन्ययोगं व्यवच्छिनत्ति। हन्त तर्हि सुकरमभविष्यत् यदि अजनीति अधायीति व्यवाच्छेत्स्यत्। अमाङ्योगेऽपि अडभावो वेदसम्प्रदाय इति सूचनायेदमुदितम्। 'दशप्रमतिं जनयन्त' इत्युत्तरसंवादाच्च। नहि सुकरता नाम विविदिषासरणिः॥

तत् प्राणतत्वम्। ततं वा प्राणतत्वम्। 'ततत्वात् तत्' इति नयचन्द्रिकाकारः। तस्य स्वजनकस्य देवस्य नारायणस्य भर्गो वाहनभूतम्। भरमाणं गच्छतीति। 'वरदो वायुवाहनः' इति स्मरणात्।

यतः नारायणादजनि तस्य सहसो देवस्य अनुग्रहादाज्ञया वा भर्गो दुर्जनभर्जनमजनीति वा। 'दुष्टान् भर्जयतीति भर्गः' इति नयचन्द्रिकाकारः। नरकाग्नौ तान् पाचयतीत्यर्थः। 'भ्रस्ज पाके' इति हि धातुं पठन्ति। श्वासरूपेणान्तः पचनेन भरतेऽन्ते च गमयति भगवन्तमिति वा।

यद्वा भर्ग इति सावित्रं नारायणाख्यं तेजः। भारतिज्ञानरूपत्वात्। तद्यतः सहसो देवस्य सकाशाज्जनि पवमानस्य। वेदार्थाविष्करणेन देवेषु प्रणयनमेव हि भगवतो जननं नाम। 'यस्ता विजानात् स पितुः पिताऽसत्' इति श्रुतेः। तत् प्राणतत्वं बट् बलात्मकम्।



यद्वा तत् तस्य सहसो देवस्य नारायणस्य सदा भर्तृ तद्वन्तृ चेति भर्गः। कथं सहाः? यस्य बलं जातु नान्ये सोढुं प्रभवन्ति स सहाः। 'अनभिभाव्यत्वात् सहः' इति स्मरणात्। भगवांस्तथा। वायुरपि भगवदनुग्रहात् तथा। 'आखणाश्मा' इति हि तं वदन्ति।

दर्शनेन ज्ञानेन ततं सर्वज्ञम्। बळिति दर्शतमिति च वायुपदमिव निर्वक्ति। बलरूपत्वाद् वः। अय गताविति धातोः सर्वज्ञत्वादायुरिति। तदुक्तम्–'बलत्वादयनाच्चैव वायुरित्यभिधीयते' इति। दर्शतं ज्ञानरूपं सर्वगतं च। सदा भगवद्दर्शनाद्वा दर्शतम्। 'दर्शतं भगवद्द्रष्टृ' इति हि सन्न्यायरत्नावल्याम्। दर्शनमेव वा दर्शतम्, ज्ञानरूपम्। तथाहि नचयन्द्रिकायाम्–'दर्शतं अतिशयेन दर्शनरूपम्। प्रातिलोम्येन तृतीयात् तृतीयस्याप्यतिशयार्थत्वात्' इति। अयमर्थः–नकारात् प्रातिलोम्येन तृतीयो दकारः। तस्य च तृतीयस्तकारः। दर्शनमिति वक्तव्ये यद् दर्शतमित्युक्तं तेनैतदाह पूर्णप्रज्ञोऽयमिति। दशप्रमतिरिति चोपरिष्टात् संवदते। सुश्लिष्टोऽयमर्थः।

तादृशं तद्रूपं इत्था इत्थं वक्ष्यमाणप्रकारेण त्रेधा वपुषे वपुर्ग्रहणाय अवताराय धायि अधायि निहितं भगवता स्वचित्तेन वा। इत्था इत्थमेव यथा मूलरूपे तथा अवतारत्रयेऽपि धृतमिति वा।

तत्र यदीं यदेव मतिः मतिनामकं हनुमानिति लोके प्रथितं प्रथमं वपुः। 'हनशब्दो ज्ञानवाची हनुमान् मतिशब्दितः' इति स्मरणात्। ऋतस्य यथार्थज्ञानस्वरूपस्य शश्वदेकप्रकारस्य वेदवेद्यस्य वा परमपुरुषस्य उप ह्वरते उपह्वरे भवति। सदा तत्समीपगत एकान्तोपासक इत्येतत्। 'उपह्वरं समीपे स्यादेकान्ते च नपुंसकम्' इत्यभिधानम्। 'ह्वृ गतौ' इति च पठनीयम्। प्रयोगतो ह्यनुगन्तव्या धात्वर्था भवन्ति।

स्वयमेव ज्ञात इति च भगवानृतः। स्वयमार्यत स्वात्मनैव केवलमिति। 'ऋतं तदात्मना ज्ञप्तेः' इति स्मरणात्। साधयति च तत्समीपगतः सदा भगवतः

सेवाम्। तत्कार्यं च। ऋतस्य सत्यवचनस्य वा रामस्य। 'रामो द्विर्नाभिसन्धत्ते रामो द्विर्नाभिभाषते' इति स्मरणात्। अथच विशेषतः सुग्रीवानुग्रहाय प्रथमं राममुपगच्छति। साधयति च सुग्रीवसख्यम्। तेन च वालिनो वधम्। साधयति च जलधिमुल्लङ्घ्य रामकार्यम्। 'ऋतं सत्यं परं ब्रह्म', 'ऋतं बृहत्', 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इत्याद्या च श्रुतिः। तेन रामस्य परम-पुरुषत्वं द्रढयति। 'आत्मानं मानुषं मन्ये' इति च लीलामानुषविग्रहत्वमेवेति ज्ञापयति।

अपि च ऋतस्य रामस्य धेनाः सन्देशवचनानि सीतां प्रति तेनैव ह्यनीयन्त। मूलरूपेण च वेदवचनानि तेनैव देवेषु प्राणीयन्त। अत एव ह्येनं प्राणमाहुः। तदेतेन साधत इति विवृतम्। भीमरूपेण च मन्युसूक्तवचनानि प्रकाशम-नीयन्त। भृतमत्वात् सोऽपि हि मतिः। दशप्रमतिस्तु स्फुटमेव मतिः। तेन च वेदवचनानि स्फुटं लोके गूढार्थप्रकटनेन प्रकाशमनीयन्त। कीदृश्यो धेनाः? सस्रुतः। अतिशयेनाऽनन्दरसस्राविण्योऽमृततुल्याः। स्रुत् स्रवणं तेन सहिता वा। सततं स्रवन्तीति वा सस्रुतः।

रामस्य धेनाः 'त्वमेव सीतान्वेषणे समर्थः' इत्येवंरूपास्तं लङ्कामनयन्त प्रापय-न्निति वा। भगवद्वचनप्रोद्बलित एव लङ्कां पपातेति। भगवादाज्ञारूपाश्च धेनाः।

अत्र प्राचीनम्—

'साधको रामकार्याणां तत्समीपगतः सदा। हनूमान् प्रथमो ज्ञेयः' इति,

'रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि' इति,

'रामस्य ह्यृतरूपस्य वाचो नेता गुणोदधिः' इति च।

अत्रैवं पण्डिताचार्याः प्रणिजगदुः—'इह हि प्रस्तुतस्य बलज्ञानस्वरूपस्य वायोः प्रथमावतारो रामस्याऽज्ञाप्रणेता साधको मतिशब्दोक्तः' इति, 'तत् सहसो देवस्य वायोः स्वरूपं महाबलं ज्ञानात्मकं ततम्। इत्थं वक्ष्यमाणप्रकारेण वपुषेऽवता-रायाधायि भगवदिच्छया स्वबुद्ध्या च। यतो भारतिज्ञानात्मकत्वाद् भर्गाख्यं



ब्रह्माभिव्यक्तमभूत्। अथवा यतो देवात् स्वयमजनि तस्य विष्णोर्देवस्य भर्तृ गन्तृ च। तत्र प्रथममृतस्य शश्वदेकप्रकारस्य रामस्याऽज्ञाप्रणेतृ यद् रूपं तस्य समीपमेकान्ततः प्राप्नोति। साधयति च तत्कार्यम्। सदा च नित्यप्रत्यक्षस्य तस्य समीपगत एव ह्ययं मतिशब्दितो हनुमान्। अद्यापि हि सिद्धगन्धर्वपरिगीतस-ततरमणात्मकसकलसज्जनमनोरमणरामाभिधेयरमारमणगुणगणामृतरसास्वाद-महोत्सवसमुद्भूतहर्षाश्रुगद्गदपुलकाकुलितः किम्पुरुषे खण्डे तिष्ठतीति वदन्ति' इति॥ ✻॥

अथ नारायणः। यत आदित्याख्यं भर्गो ज्योतिरजनि तस्य सहसो देवस्य रूपं बळाद्यात्मकम्। अवतारेष्वपि तादृशमेवेति। सहसो वायोर्देवस्य वा सकाशात् यद् भर्गः नारायणाख्यं तेजोऽजनि। 'प्राण ओजः सहो बलम्' इति भागवते। 'अहं तत् तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः' इति श्रुतिः। यतः सर्वं जगद-जनि तस्य सहसो देवस्येति वा। यर्दीं यदैव तन्नारायणाख्यं तेजः ऋतस्य धेना वेदवचनानि साधकसमीपमनयन्त, तेन च तानि स्वाशयापावरणेन भगवद्गुणान् प्रकाशयन्ति, तदैव तस्य साधकस्य मतिः भगवत्स्वरूपमित्थमुपगच्छति। उपपन्नतयाऽधिगच्छति। साधयति च भगवदनुग्रहं स्वाभीष्टं च सर्वमिति।

यद्वा यदा मतिरुपह्वरते एकान्ततया भगवन्तं शरणमेति, 'शान्तो दान्त उपरत-स्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽत्मानं पश्येत्' इति श्रुतेः, साधयति च भगवत्प्रीतिकराणि कर्माणि तदैव तमृतस्य धेना भगवत्समीपं प्रत्यनयन्त नयन्ति। स्वासु पिहितं परमार्थं तस्मै विवृणत इति।

सहस्रमर्थाः प्रतिपदं परिस्फुरन्ति। कियन्तश्चिदेव कथिताः। पर्याप्तं सूक्ष्मदृशा-मिति। स्थूलदृशां पुनरतिकथनेनापि किं फलम्?॥ १॥

## (सङ्ग्रहभाष्यम्)

**ॐ॥ प्राणमग्निं सम्प्रणम्य विनोदाय विपश्चिताम्।**

**पुनः प्राणाग्निसूक्तस्य सङ्ग्रहेणार्थ उच्यते॥**

त्रयोदशर्चस्य सूक्तस्य दीर्घतमा ऋषिः । अग्निर्देवतेति वदन्ति । स्यादिदं संहितापाठे । अन्यत्र तु भृगुः ऋषिः । प्राणाग्निर्देवतेति तु सर्वत्र ।

बट् बलरूपं तत् ततं प्राणतत्वम् । दर्शतं ज्ञानरूपम् । यतः सहसोऽनभिभाव्याद् देवादजनि तस्य देवस्य भर्गः वाहनभूतम्, भूत्वा गच्छतीति । इत्था इत्थमेव ज्ञानानन्दादिरूपेण त्रेधा वपुषेऽवताराय धायि अधायि निहितम् । यदीं यदेव तत्र प्रथमं स मतिः मतिमान् हनुमान् । सदा ऋतस्य अविकारस्य रामस्य उप समीपे ह्वरते चरति । साधयति च रामकार्यम् । सततं रसस्रुतः रामस्य धेनाः सन्देशवाचः सीताया अनीयन्त च तेन ॥ १ ॥

**पृ॒क्षोवपुः॑पि॒तु॒मान्नित्य॒ऽआश॑येद्वि॒तीय॒मास॒प्तशि॑वासुमा॒तृषु॑ ।**
**तृ॒तीय॑मस्यवृष॒भस्य॑दो॒ह॑से॒दश॑प्रमतिञ्जनयन्त॒योष॑णः ॥ २ ॥**

**पृ॒क्षः । वपुः॑ । पि॒तु॒+मान् । नित्यः॑ । आ । श॒ये॒ । द्वि॒तीय॑म् । आ ।**
**स॒प्त+शि॑वासु । मा॒तृषु॑ ॥ तृ॒तीय॑म् । अ॒स्य॒ । वृ॒ष॒भस्य॑ । दो॒हसे॑ ।**
**दश॑+प्रमतिम् । ज॒न॒य॒न्त॒ । योष॑णः ॥ २ ॥**

गार्हपत्यः स्तुतः । अथाऽहवनीयः स्तूयते । पितुरित्यन्ननाम । पितुमान् हवीरूपप्रशस्तान्नभोक्ता । आहवनीये हि हवींषि हूयन्ते । सप्तलोकशिवकरीषु मातृषु श्रीभूदुर्गासु नित्यमा शये आश्रितस्तिष्ठति । 'चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह' इत्यादेः । तन्निमित्तं वा यज्ञशालायां नित्यमा शेते । अग्निप्रतीके भगवद्यजनेन मातरस्तुष्यन्ति प्रकृतिपुरुषकालमानिन्यः । तुष्टाश्च भोगैश्वर्यं समृद्धजीवनं दीर्घमायुश्च ददतीति । पृचं पापसम्पर्कं क्षपयतीति पृक्षोऽयमाहवनीयः तस्याग्नेर्द्वितीयं वपू रूपम् ।

सप्तसु शिवासु यजमानाभीष्टजननेन मातृस्थानीयासु जिह्वासु वा यः शेते नित्यं सन्निधत्ते । तदुक्तम्–'काळी कराळी च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः' इति ।



अभिलषितानि वर्षतीति वृषभस्याग्नेस्तृतीयं रूपमन्वाहार्यपचनाख्यम् । तदपि मातृवद् यजमानाभीष्टक्षीरदोहाय स्थितम् । 'पिता वै गार्हपत्योऽग्निर्माताऽग्निर्दक्षिणः स्मृतः' इति स्मरणात् । दश पितृपतयः । तेषां प्रमतिरभीष्टः । पितृमेधीयकव्यसमर्पकत्वात् । दशभिः कलाभिः प्रमितिविषयं वा । तथाह्युक्तम्–'धूमार्चिरूष्मा ज्वलिनी ज्वालिनी विष्फुलिङ्गिनी । सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि' इति ।

तमेतं योषणः वेदाभिमानिन्यः पूर्वोक्ता मातर एवाजनयन्तेति । वेदवाग्भिर्हि मथ्यतेऽभिमन्त्रितः । सप्त जिह्वा एव वा योषणः । योषा जोष्यत्वतो मिश्रणाद्वा । हव्यकव्ये हि ताभिर्जोष्यन्ते ॥ ✻ ॥

अथ प्राणः । पितुमान् बहुभुक् पितोः । विशेषतो बकवधप्रसङ्गे । वृकोदरो हि सः । स च वृकाग्निः सर्वं ग्रसति । उक्तं हि 'जाज्वल्यमानं मम जातवेदसम्' इति । पृतनाक्षयकारीति पृक्षः । 'सम्पृक्तत्वात् पृतना पृगित्युच्यते । तां क्षपयतीति पृक्षः । भीमसेन इति यावत्' इति नयचन्द्रिकायाम् । तदेव द्वितीयं वपुः । अस्मिन्निर्वचने 'पृक्षः' इति ककारगर्भं पदम् । 'नृपव्याजदैत्यपृतनाक्षयकारित्वात् पृक्षशब्दाभिधेयं द्वितीयं रूपम्' इति सन्न्यायरत्नावल्याम् । तद्रूपं सप्तसङ्ख्यासु शिवासु मातृषु भगवत्प्रमाजननीषु विद्यासु नित्यमा शेते । काः सप्त? ऋगादयश्चत्वारो वेदा भारतरामायणात्मक इतिहासः पञ्चरात्रं भगवत्प्रतिपादकं पुराणजातमिति ।

भीमशब्दस्य द्वयी निर्वचनसरणिरुक्ता भवति । पृक्ष इत्येकम् । शत्रुसेनाभयङ्कर इति । मातृषु शय इत्येकम् । भृता मा येन स भीम इति । तदुक्तम्–

'पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
'पूर्णप्रज्ञस्तथाऽनन्दतीर्थनामा प्रकीर्तितः' इति ।

'हनूमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः' इति,

'भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।

'ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।

'प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः' इति च ।

पण्डिताचार्या अप्याहुः– 'द्वितीयं वपुः पृतनाक्षयकृत् पृक्षशब्दोक्तम् । ऋगादि-सप्तविद्यानिवासात्मकं च' इति । 'तस्यैष क्षितिभारभूतप्रभूतबलदुर्दमदुष्टजन-संहरणकृतावतारस्य कृष्णस्य सहकारि पृतनाक्षयकारि पृक्षो द्वितीयं वपुः' इति च ।

अस्य देववृषभस्य तृतीयं वपुः दशप्रमतिनामकं दोहसे ज्ञानदोहाय सतामभीष्ट-दोहाय वा योषणः जनयन्ताजनयन्त । जनयन्ति वा । योषणः श्रुतय एव । स्वार्था-विष्करणाय श्रुत्यभिमानिन्यः श्रीभूदुर्गा एव मध्वमातरि सन्निहितास्तमजनय-न्तेति । तथाहि पण्डिताचार्याः–'अस्य वृषभस्य तृतीयं वपुर्ज्ञानदोहनार्थं योषासु जातम्' इति ।

कथं दशप्रमतिः? आह–

'दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।

'प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः' इति ।

'शतं दश सहस्रं च सर्वमक्षय्यवाचकम्' इत्यन्यत्र ।

'दशशब्दः पूर्णवाची । 'तानि दश दशेति वै सर्वमेतावती हि सङ्ख्या' इत्यादिश्रुतेः । दशप्रमतिमिति पूर्णप्रज्ञनामोक्त्या सर्वज्ञत्वमुक्तम्' इति च पण्डिताचार्याः । इदमपूर्वं प्राणनाम वेदे सकृदेव प्रयुक्तमत्र । अतो व्याख्यातारस्तदर्थवर्णने बभ्रमुः ।

योषणः श्रुतय एव तं दशप्रमतिं जनयन्त व्यानञ्जुरिति वा । तस्यानन्तश्रुत्यर्थ-निर्वचनपटीयस्त्वमेव दशप्रमतितां स्फुटयतीत्येतत् । तदुक्तम्–

'अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।

'विसृता नृषु जातं तु तं विद्याद् देवसत्तमम्' इति ।



'प्रत्यक्षमेव चैतद् दृश्यते भगवति भाष्यकारे' इति च पण्डिताचार्याः । 'तृतीयं मध्व उच्यते । 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्' इत्युक्तम् । अतः श्रीमदानन्दतीर्थभगवत्पादाचार्य इत्यर्थः । यस्यास्खलितानवरतवेदशास्त्र-व्याख्यानश्रवणकौतुकसमुत्खातदुःखसङ्घातो निखिलपण्डितवर्गो महामृत-समुद्रावगाहीव बहुलमाह्लादमाप्नोति' इति च ।। ✻ ।।

अथ नारायणः । प्रथममन्त्रे तावदन्तर्यामिरूपमुक्तम् । भक्तानामुप समीप एव हृदयान्तरेकान्ततो यद्वर्तते साधते च तत्र सकलशरीरव्यापारं भक्तानामभीष्टं च तज्ज्ञानरूपत्वान्मतिशब्दितमन्तःस्थरूपमिति । 'नेदं यदिदमुपास ते' इति हि श्रुतिः । इदानीं बहिर्गतं द्वितीयं रूपमाह–पृक्ष इत्यादि । दैत्यसेनाक्षयकरम् । पितुमान् । 'सर्वं वा अत्तीति तददितेरदितित्वम्' इति श्रुतेः । अग्न्यादिगतं च । 'अग्नौ क्रियावताम्' इति च भागवते ।

'सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम् ।

'भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ।।

'सूर्ये तु विद्यया त्रय्या हविषाऽग्नौ यजेत माम् ।

'आतिथ्येन तु विप्राग्ग्ये गोष्ठे गा यवसादिना ।।

'वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया ।

'वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ।।

'स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ।

'क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम्' इति च ।

तत्राऽराधितः पापपृतनाक्षयकारी । अग्न्यादिगतो बहुभुक् च मुख्यतः स एव । नित्यश्चावताररूपेष्वपि । नित्यमा शेते वा सप्तशिवासु मातृषु परममुख्यवाच्य-त्वेन । आकारद्वयमभिव्याप्तिसामीचीन्ययोरर्थयोः ।

तृतीयमस्य वृषभस्य रूपमुत्तमाधिकारिणां देवानां मोक्षदोहाय योषणः श्रुति-वनिता जनयन्त जनयन्ति ज्ञापयन्तीति । कथम्? दशप्रमतिम् । दशस्वपि दिक्षु प्रमतिर्यस्य तादृशं ज्ञापयन्ति । सर्वगत्वेन प्रमित इत्यर्थः । 'सूर्य एकं इन्द्र एकं जजान' इत्यादिवदिह ज्ञापनार्थो जनिधातुः । रूपत्रैविध्यं चोक्तम्—'उपासात्रै-विध्यात्' इति ।

'केषाञ्चित् सर्वगत्वेन केषाञ्चिद् हृदये हरिः ।
'केषाञ्चिद् बहिरेवासावुपास्यः पुरुषोत्तमः' इति ब्राह्मे ।

महतः स्रष्टृ, अण्डसंस्थितम्, सर्वदेहगतं चेति पुरुषरूपत्रयं वा ॥ २ ॥

**(सं.भा.)** पृतनाक्षपणः पृक्षः । पितुमान् बह्वन्नभुक् । पितुरित्यन्नम् । भीमः द्वितीयं वपुः । आ समन्तात् शिवासु सप्तसङ्ख्यासु मातृषु विद्यासु नित्यमाशेते विहरति, आशयमाविष्करोति च सज्जनलोकस्य । वेदाश्चत्वारः इतिहासः पञ्चरात्रं पुराणानीति सप्त शिवाः । देववृषभस्यास्य तृतीयं वपुः सतां ज्ञानदोहाय सप्तशिवास्वेवाऽशेते । तमेतं दशप्रमतिं पूर्णप्रज्ञमजनयन्त श्रुतियोषितः ॥ २ ॥

**निर्य्यदीम्बुध्नान्महिषस्यवर्प्पसऽईशानासश्शवसाक्रन्तसूरयः ।**
**यदीमनुप्रदिवोमध्वऽआधवेगुहासन्तम्मातरिश्वामथायति ॥ ३ ॥**

**निः । यत् । ईम् । बुध्नात् । महिषस्य । वर्प्पसः । ईशानासः । शवसा । क्रन्त । सूरयः ॥ यत् । ईम् । अनु । प्र+दिवः । मध्वः । आ+धवे । गुहा । सन्तम् । मातरिश्वा । मथायति ॥ ३ ॥**

यदीं यस्मादेव बुध्नात् तारतम्यतलस्थादग्नेः । 'अग्निर्वै देवानामवमः, विष्णुः परमः' इति श्रुतेः । महिषस्य तारतम्यान्तगस्य वर्पसः गुणान् रूपाणि वा । वरणात् पालनाच्च । वरत्वात् पालनाच्च वा । वरान् पालयतीति वा । ईशानासः लोकानां य ईशते चक्रवर्त्यादयः सूरयश्च ज्ञानिनो मुनयः निःक्रन्त निरचिन्वत । तदपि शवसा सुखेन । ज्ञानेन वा कर्मणा साधितेन । 'कर्मणा ज्ञानमातनोति' इति श्रुतिः । राजभिरश्वमेधराजसूयादिभिः विप्रैरग्निष्टोमवाजपेयादिभिराराधितेनाग्निनैव निश्रे-



णिकया प्रभवन्ति परमपदमारोढुमिति । अग्निर्वै देवानां मुखम् । वाग्देवता च सः । वाचा च हि स्तुतो भगवान् । वाचा च हि प्रीणाति । कर्मणा च हि ज्ञानमा-तनोतीति । 'शव गतौ' इति धातुपाठः ।

किञ्च यदीं यमेव गुहायां काष्ठान्तर्निलीनं सन्तं प्रदिवो द्योतमानात् स्तुतिमन्त्रपु-रस्कृताद्वा मध्वः मधुरादाज्यादेः प्रक्षिप्ताद्धेतोः आधवे धाय्यामन्त्रैराधवने कृते सति मातरिश्वा मथायति मथित्वेव प्रादुर्भावयति । प्रादुर्भाव्य प्रोज्ज्वलयति । तदप्यनुक्रमेण । प्रथमं काष्ठे निलीनो धूमधूसरः । ततः किञ्चिदिव शोणः । ततः स्फुलिङ्गलिङ्गोऽङ्कुरितज्वालः । ततः सप्तवर्णाभिर्ज्वालाभिः प्रज्वलतीति । मात-रिश्वा च वायुः धाय्यामन्त्रपुरस्कृतेन व्यजनधवनेन निष्पन्न इति ॥ * ॥

अथ प्राणः । बुध्नात् । बोधयतीति बुध्नः । बुधिर् बोधने । नित्याविलुप्तज्ञानात् प्रळयेऽपि प्रतिभातपरावरात्, बुधान्नयतीति बुधाग्रण्यो वा, बध्नातीति वा बन्धकाद् यस्माद् वायोरेव महिषस्य महितषड्गुणस्य, मह्यत इति सर्वपूज्यस्य वा, 'मह पूजायाम्' इति धातोः, मंहत इति नित्यप्रवृद्धस्य वा, 'महि वृद्धौ' इति धातोः, महत्सु ब्रह्मादिषु च शेत इति वा महिषस्य नारायणस्य वर्पसो गुणाः । भक्तै-र्व्रियन्ते तान् पान्ति चेति । अवताररूपाणि वा । तान् ईशनासः सूरयः शवसा निःक्रन्त निश्चितवन्तः । जगदीशानाः स्वतो ज्ञानिनोऽपि ईशानाद्या देवाः । शवसा अनायासेन, वायूपलब्धविशेषज्ञानेन वा । परतत्वस्य देवेषु प्रणयनादेव च तस्य प्राण इति नाम प्रथितम् ।

मध्वरूपेण च विशेषज्ञानाविष्कारः कृत इत्याह— यदीम् । यस्मादेव कारणात्, यस्मिन् वा रूपे, प्रदिवः प्रकृष्टज्ञानो मध्वः मध्वनामा भूत्वा गुहा सन्तं वेदेषु गूढं दुर्वादिभिर्गूहितं च भगवन्तं हृदयगुहायामेव सन्तमथाप्यविदितचरमिति वा, आ धवे सर्वपतित्वे सर्वोत्तमत्वस्थापनार्थं मथायति । यथाऽरण्योर्गूढमग्निं मथनेन व्यञ्जयन्ति तथा वेदव्याख्यानव्याजमथनेन अरण्योर्गुरुशिष्ययोर्निहितमग्निनारा-यणं प्रख्यापयतीति । मथनेन नवनीतमिव भगवत्तत्वं समुद्धरतीति वा । तस्मात् सूरयः निःक्रन्तेति ।

'अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः' इति,
'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्' इति च काठके।

'आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम्।
'असत्यमप्रतिष्ठं च जगदेतदनीश्वरम्॥

'वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति।
'येन विष्णोर्हि वर्पाख्यान् गुणानज्ञासिषुः परान्॥

'ईशानासः सूरयश्च निगूढान् निर्गुणोक्तिभिः।
'त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः' इति प्राचीनम्॥

'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्।
'मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः' इति च॥

'तृतीयं मध्वः। मधुशब्द आनन्दवाची। 'कामानलं मधुलवैः शमयन् दुरापैः' इत्यादौ दृष्टत्वात्। अकारस्तीर्थवाची। पापप्रतिषेधरूपत्वात् तीर्थस्य। अथवा वकारस्तीर्थवाची। तस्यामृतवाचित्वेन जलवाचित्वसम्भवात्। एवं मध्व आनन्दतीर्थः' इति नयचन्द्रिकायां निर्वचनसरणिरपराऽपि न्यरूपि। तथैव च तत्वमञ्जर्यामपि।

पण्डिताचार्या अप्याहुः–'येन शवसा सुखेन महितषड्गुणस्य विष्णोर्वरणीयान् गुणान् रुद्रादीश्वरा अन्ये च सूरयो निरक्रन्त निरजानत। यत्र चायं प्रदिवः प्रकृष्टज्ञानो मध्वनामा भूत्वा मातरिश्वा गुहायां निहितं विष्णुं आ धवे आ समन्तादीश्वरत्वे मथायति प्रकाशयति। असत्यमनीश्वरं जगद्वदद्भिरसुरैर्गूहितं सन्तं प्रकाशयतीत्यर्थः' इति॥ ॐ॥

अथ च नारायणः। बुध्नात् बोधरूपात्, बुधनेतुः सर्वमूलाद्वा। 'बुध्नो ना मूलरुद्रयोः' इत्यभिधानम्। पूर्वोक्तदिशा बन्धकाद्वा, 'बन्ध बन्धने' इति धातोः। 'बन्धेर्ब्रधिबुधी च' इति नका रूपं निरपादयत् पाणिनिः। रुद्रान्तर्यामिणो वा।



मनोनेता हि रुद्रः। यस्मादेव यस्य महिषस्य वर्पसो गुणान् ईशानाः सूरयश्च निरक्रन्त। 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेः।

प्रदिवः प्रकृष्टज्ञानस्य प्रकाशरूपस्य वेदेड्यस्य वा मध्वः मधुन आनन्दरूपस्य। 'मध्वित्यानन्द उद्दिष्टः' इति स्मरणात्। मदनिधानत्वाद्वा। प्रसिद्धं चैतन्नाम मधुविद्यायाम्– 'असौ वा आदित्यो देवमधु' इत्यादि।

'य आदित्यगतो विष्णुः स एव मधुनामकः।
'मदधिर्मध्विति प्रोक्तो मदः सुखमिहोच्यते' इति च।

तस्य यदीं यदिदं गुणजातं वर्पस इति प्रस्तुतं तदनु भगवत्पारम्यानुगुणतया आधवे विधूनने सति। आपाततः प्रतीयमानदोषादिव्युदासेन समग्रायाः श्रुतिततेः भगवत्परतानिर्धारणमेव विधूननं नाम। 'धू विधूनने' इति धातुः। धान्यस्य वितुषीकरणमिव, उत्पवनमिव च तितउना। गुहा सन्तं हृदयगुहायां वेदेषु वा निगूढतया सन्तमन्यथाज्ञानेन तिरोहितमिव स्थितं यं वायुर्मथायति मथ्नाति, मथित्वा च प्रकाशयति, स एव नारायणः स्तूयते॥ ३॥

**(सं.भा.)** बोधतीति बुध्नः। यदीं यस्मादेव पूर्णबोधात् महितस्य नारायणस्य वरणेन पान्तीति वर्पसः गुणान् ईशानाद्या देवा अन्ये च सूरयः शवसा अनायासेन निःक्रन्त निश्चितवन्तः। यदीं यत्र चावतारे मध्वो भूत्वा प्रदिवः प्रज्ञानः पूर्णप्रज्ञ इत्येतत्, भगवन्तं आ समन्तादीश्वरत्वे मथायति मथित्वा प्रकाशयति, गूढं सन्तम्; शास्त्रानुगुणम्॥ ३॥

**प्रयत्पि॒तुःप॑र॒मान्नी॒यते॒पर्य्या॑पृ॒क्षुधो॑वी॒रुधो॒दं॑सु॑रोहति।**
**उ॒भाय॑द॑स्यज॒नु॒षं॑यदिन्व॑त॒ऽआदिद्यवि॑ष्ठोऽअभवद्घृ॒णाशुचि॑ः ॥४॥**

प्र। यत्। पि॒तुः। प॒रमात्। नी॒यते॑। परि॑। आ। पृ॒क्षुधः॑। वी॒रुधः॑। दम्+सु॑। रो॒ह॒ति॒॥ उ॒भा। यत्। अ॒स्य॒। ज॒नुष॑म्। यत्। इन्व॑तः। आत्। इत्। यवि॑ष्ठः। अ॒भ॒व॒त्। घृ॒णा। शुचि॑ः॥ ४॥

अग्निस्त्रेता स्तुता। सम्प्रति तुरीयः प्रणीता स्तूयते।

यस्य पितुरन्नं हविरादि यस्मात्, परमान्नारायणादेव परितः प्रणीयते। अत एव तं प्रणीताग्निमाहुः। अग्नौ प्रास्ताऽऽहुतिर्देवान् प्रीणीयात्, अग्निश्च देवानां मुखं भूयात्, तस्मिन् प्रासनेन चाऽहुतिरादित्यमुपस्थासीष्ट, आनेषीष्ट च वृष्टिम्, तेन चान्नं प्रजाश्च समृद्ध्यासुरिति हि भगवत्सङ्कल्पेन यजमाना अग्नौ हविरादि जुह्वति। ततोऽग्निः पितुमान् बभूव।

कृष्णावतारे च, खाण्डवदहनेन परमसङ्कल्पादेवाप्पित्तस्य पितुरनीयत। परितः सर्वयज्ञेषु च। अथ च परमात् ज्येष्ठात् पितुः गार्हपत्यादाहवनीयोऽग्निः परितः प्रणीयते। 'पिता वै गार्हपत्योऽग्निः' इति हि स्मरन्ति। 'अथवाऽऽहवनीयोऽग्नि-गार्हपत्यात् प्रणीयते' इत्यृग्भाष्ये।

अत्र परिपर्यन्तः प्रथमः पादः। आतो द्वितीयः। विश्लेषेण जागतत्वम्।

आहुतिमध्ये प्रज्वलनार्थं प्रक्षिप्ता वीरुधो दंसु दन्तेषु आरोहयति। वीरुध अग्ने-र्जिह्वाभिः पृक्ताः सत्यः क्षुवन्ति चटचटायन्त इति पृक्षुधः। अत एव ता अदन्न-ग्निर्दन्तैः कटकटायत इवेति सालङ्कारमाह– दन्तेष्वारोहयतीति। टु क्षु शब्दे। पृक् सम्पृक्तिः। पृची सम्पर्के।

यस्यास्य जनुषं प्रादुर्भवनरूपं जनुरुभौ मातरपितराविव गार्हपत्यान्वाहार्यपचनौ यत् यस्मात् इन्वतो व्याप्नुतः। 'इवि व्याप्तौ'। गुरुस्थानीयो ह्याहवनीयः। 'गुरु-राहवनीयः स्यात्' इति हि स्मरन्ति। 'पिता वै गार्हपत्योऽग्निर्माताऽग्निर्दक्षिणः स्मृतः' इति चोक्तम्। युक्तं च पितृभ्यां पाश्चात्यत्वं गुरोः। गृहस्थेनाऽविवाहाद् गार्हपत्यस्य, आ च पितृमरणाद् दक्षिणाग्नेरुपस्थानात् पूर्वमेव यजमानेन प्रणीतौ तावेनमाहवनीयमाप्नुत इति सूक्तम्। उभावध्वर्युयजमानौ वा।

आदित् तस्मादेव यविष्ठोऽयं युवतमोऽयं ताभ्यां युततमो वा घृणया युक्तः शुचिः प्रकाशमानो नित्यशुद्ध आसीदिति। घृणावान् वा। घृणा दीप्त्या भक्तान्



प्रकाशयन् अभक्तान् शोचयन् वा रोचते। 'शुच शोके', दीप्तौ चेति पठनीयम्। कथं घृणा? 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्याजालः' इति हि पाणिनिरपि स्मरति॥ ❊॥

अथ प्राणः। अस्य वायोः परमपुरुषादेव जठरस्थात् पितुरन्नं परिणीयते।

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
'प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' इति हि गीतासु।

यस्य परमस्यानुग्रहादेव तेन वायुना पितुरन्नं प्रणीयतेऽभिमानित्वेन नियम्यते वा। तथाहि श्रुतिः– 'तीत्यन्नम्' इति। तत्र हि प्रजापतिरन्नमुच्यते। तथाहि भाष्यम्–

'तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान्।
'अन्नं प्रजापतिरिति श्रुतिरन्या ह्यभाषत' इति।

अन्या च श्रुतिः– 'पवमानः प्रजापतिः' इति चाभाषत।

सर्वेषां च देवानां पितुरनेनैव परिणीयते। तदुक्तम्– 'तस्माद् यस्यैकस्यैच देव-तायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः' (ऐत.२.३.४) इति।

तथा च भाष्यवचनम्–

'अशनापिपासामानी तु द्विरूपो मारुतोऽवदत्।
'कुर्वाज्ञामावयोश्चैव यथा त्वच्छासनानुगौ॥

'नित्यं भवावेति हरिः सर्वत्र प्रविशेत्यमुम्।
'आह तस्माद् देवतानां सर्वासां भागभुङ् मरुत्॥

'अशना पिपासाऽपानश्च मृत्युश्चेति चतुर्विधः।
'एक एव महान् वायुः सर्वदेवेषु संस्थितः' इति॥

परमात् सर्वोत्तमात् पितुः साक्षात् स्वजनकान्नारायणादेवायं सर्वकार्येषु परितो मूले चावतारेषु च प्रणीयते। विशेषतश्च यद् यत्र रूपे भगवदिच्छया आ सेतोरा

हिमाद्रेः परितः प्रणीयते तीर्थानां जलरूपाणां पावनत्वाय, शास्त्ररूपाणां चाऽविष्काराय स मध्वनामेति ।

या विरुन्धन्ति वेदपरमार्थं ता वीरुधः । दैर्घ्यं विरोधमवधारयति । तादृश्यो दुर्वादिनां याः पृक्षुधः पृच्छारूपाः क्षुधः प्रश्नोक्तयः पृच्छ्यन्त इति वा पृक्षुधः प्रश्नाः । पृच्छया याः क्षुधः बुभुक्षाः बुभुत्सा इति वा । पृचा श्रवणसम्पर्कमात्रेण याः सतां क्षोदयन्ति मनांसि ता वा पृक्षुधः । दुरुक्तयो वितण्डाः । ता दंसु पर्यारोहयति । वीरुधो लता यथा गोवृषभः कश्चिद् दन्तेष्वारोप्य शकलयन् चर्वश्चर्वं रोमन्थमभ्यस्यति तथाऽयं दुर्वादिनां वितण्डावचनानि, जिज्ञासतां बुभुत्सावचनानि च देववृषभो निरवशेषं निरायासं निरासंनिरासं खण्डयतीत्यर्थः । तदुक्तं पण्डिताचार्यैः– 'यत्र च परमेश्वरस्य स्वपितुरिच्छया नीयमानः प्रश्नवीरुधः स्वदन्तेषु पर्यारोहयति चर्वितवच्छकलीकरोतीत्यर्थः' इति ।अथ जनुषं प्रत्यवतारम् । कीदृशम्? यत् ज्ञानरूपम् । यद् यस्माच्च उभौ जगतः पितरौ लक्ष्मीनारायणौ इन्वतो व्याप्नुतः । परमप्रीतिपात्रे स्वपुत्रे तस्मिन् विशेषतः सन्निधाय तं प्रेरयत इति । अवतारेषु च स्वयमवतीर्य । हनुमदवतारे सीतारामौ भूत्वा । भीमावतारे रुग्मिणीसत्याभामे कृष्णश्च भूत्वा । मध्वावतारे लक्ष्म्याः स्फुटमनवतारेऽपि वेदाभिमानिरूपेण, वेदव्यासरूपेण च । दुर्गारूपेण च विमानगिरौ । 'वरविमानगिरावपि चण्डिका शिशुमहो जननी तमलाळयत्' इति च मध्वविजये । स्वपतिर्नारायणः स्वपत्नी भारती च वोभौ देवौ । हनुमदवतारे विप्रकन्या । भीमावतारे काळी च द्रौपदी च । मध्वावतारे च भारती चन्द्रेति बभूवेति विदिततत्वा वदन्ति ।

यस्माज्जगतः पितरौ साक्षाच्चास्य पितरावेनमिन्वतः आदित् तस्मादेव कारणात् । अकारवाच्यान्नारायणादेव वा व्यासरूपाद्वा । 'अ आ अं अः पुराणर्षिर्व्यासः सत्यवतीसुतः' इति पाद्मवचनात् । 'गुरूंश्चान्' इति स्ववचनाच्च । अयं यविष्ठः युवतमः नित्ययुवा । घृणावान् कृपालुः, ज्ञानप्रकाशवान्, अभीष्टक्षरणशीलश्च भक्तेषु । घृ क्षरणदीप्त्योः । शोचन्त्यनेनेति शुचिः । सतां ज्ञानदः । असतां दुःखदश्च । स्वयं च सदा शोचति प्रकाशते ।



शुचिरित्यग्निवाय्वादित्यानां नाम । भूर्भुवःस्वःस्थानेषु अग्निवाय्वादित्येषु गतो नित्यशुद्धो भगवत्प्रतीकभूत इति वा । उक्तं हि 'वायौ मुख्यधिया' इति । तथाहि बृहदारण्यके– 'तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्निः । स त्रेधाऽऽत्मानं व्यकुरुताऽदित्यं तृतीयं वायुं तृतीयं स एष प्राणस्त्रेधा विहितः' इति ।

'वायुरग्निरिति प्रोक्तो ह्यग्रणीत्वादथाङ्गिनाम् ।
'नेतृत्वाददनाद् वाऽपि तस्य स्रष्टा जनार्दनः ।।

'स वायुर्वायुरूपेण जगत् पाति शरीरगः ।
'आदित्यस्थेन रूपेण जगद् याति प्रकाशयन् ।
'अग्निस्थेन तु रूपेण हूयते सर्वयष्टृभिः ।।

'आदाय यात्यायुरिति स एवाऽदित्य उच्यते ।
'तत्सम्बन्धात् तु तन्नाम सूर्यस्याग्नेस्तथैव च' इत्यादि च प्रभञ्जने ।

अवतारेषु यविष्ठ इति विशिष्य मध्ववचनं च । स तु घृणावान् सन्न्यासस्वीकारेण शुचिश्च बभूव । नतु पूर्वावतारयोरिव शत्रून् स्वयमस्त्रैर्वा जघान ।। ✻ ।।

अथ नारायणः । परमात् श्रेष्ठात् पितुर्ज्ञानिन एव ह्ययं लोकेषु परितः प्रणीयते । 'यस्ता विजानात् स पितुः पिताऽसत्' इति हि श्रुतिः । मुख्यतश्च मुख्यप्राण एवात्र पिता । अत एव भारती मातोच्यते– 'तं माता रेळ्हि स उ रेळ्हि मातरम्' इति । पितुर्लोकपितुरिति च । स हि देवेषु प्रणयति भगवन्तम् ।

वीरुधो हिरण्यकशिपोरन्त्ररूपा नरहरिरूपेण दंसु आरोहयति । ताश्च दन्तसम्पृक्ताश्चटचटायन्त इति पृक्षुधः । वीरुधो वा नित्यं विरोद्धारो दैत्याः । तान् नाशयति । कीदृशान् ? पृक्षुधः । पृतनया सह क्षवमाणान् अभिधावतः । 'क्षुङ् गतौ' ।

यश्चोभौ प्रकृतिपुरुषौ यत् अयातयत्। अयत् व्यापेति वा। तौ चास्मिन्नित्याह– अस्य जनुषं अनेन सृष्टं सर्वं जगत् यत् याविन्वतो व्याप्नुतः। आदित् तस्मादेव कारणात् क्षराक्षरसमत्ययात् यविष्ठो नित्ययुवा। नित्यनूतन इत्येतत्। अतिशयेन सर्वत्र जगति स्यूतो वा। यु मिश्रणे।

घृणावान् परमदयापयोनिधिः। सन्ततं सतामभीष्टक्षरणदक्षिणः। उन्मिषत्पूष-प्रतीकाशप्रकाशप्रततावकाशः। नित्यपरिशुद्धश्च। सूर्यादीनां भासकः। दुर्जन-दुःखदश्च॥ ४॥

**(सं.भा.)** यत् यत्र रूपे परमपुरुषात् साक्षात् स्वपितुर्नारायणात्, तदिच्छयेत्येतत्, प्रणीयते, पृक्षुधः पृच्छ्यन्त इति प्रश्नान् वीरुध इव दन्तेषु पर्यारोहयति सोऽयं मध्वनामा देवर्षभः। यत् यस्य अस्य जनुषं उभा रमानारायणौ इन्वतः व्याप्नुत इति यत् आदित् तस्मादेव स त्रिषु अवतारेषु यविष्ठो मध्वः सत्सु घृणावान्, शुचिर्नित्यशुद्धोऽभवत्। असतां शोचकः। सतां प्रकाशकश्च॥ ४॥

**आदिन्मातॄराविशद्यास्वाशुचिरहिंस्यमानऽउर्वियाविवावृधे।**
**अनुयत्पूर्वाऽअरुहत्सनाजुवोनिनव्यंसीष्ववरासुधावते ॥ ५ ॥**

**आत्। इत्। मातॄः। आ। अविशत्। यासु। आ। शुचिः। अहिंस्यमानः। उर्विया। वि। ववृधे॥ अनु। यत्। पूर्वाः। अरुहत्। सना+जुवः। नि। नव्यंसीषु। अवरासु। धावते॥ १॥**

अत्र प्रथमचतुर्थपादयोः क्षैप्रविश्लेषेण द्वादशाक्षरता निष्पादनीया। यासु आ शुचिरिति, नव्यसीषु अवरास्विति। अन्यथा तु द्व्यक्षरोनतया विराड्जगती। सर्वथा जागतत्वं न विहन्यते। उक्तं हि–'नवा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्याम्' इति।

अथ पञ्चाग्निषु चरम आग्नीध्रः। आदित् तस्मादेव सघृणत्वादेव यजमाने, मातॄः सप्तज्वाला आविशदग्निः। यासु सन्निहितः आशुचिः शुद्धो दीप्यते। कविर-प्याह–'तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः' इति। यत्र क्षिप्तमप्यशुचि शुचि



भवति। दुष्टशक्तिभिरहिंस्यमानो मन्त्रकवचत्वात्। मन्त्रेषु वा मातृष्वाविवेश। मन्त्रपूता आहुतीर्देवेषु वहामीति। मन्त्रैः स्तुतस्य, स्तुत्या च प्रसन्नस्य यजमा-ननिघ्नतैवाऽवेशो नाम। एवं उर्विया च स्वशक्त्या विवर्धते। वावृध इति संहितायां दैर्घ्यं तस्य वृद्धिर्यजमानवृद्धिसाधनी बभूवेति द्योतयति। उक्तं हि–

'संहितायां यत्र दैर्घ्यं पदे यत्र न दृश्यते।
'उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्' इति।

पूर्वाः पूर्वप्रक्षिप्ताः समिधः सना दीर्घकालं युवन्तीति सनाजुवः। 'यु मिश्रणे'। समेधनात् पूर्वमेव निक्षिप्ता दीर्घकालमदग्धाः स्थिताः। ततश्च क्रमेणाऽज्या-दिना हुतेन सुसमिद्धः अनुक्रमेणैवाऽरोहति आक्रम्य दहति। समिद्धे विशद-विततजिह्वे प्रहुतासु पाश्चात्यासु नव्यसीष्ववरासु समिदाद्याहुतिषु तु नि धावते। चिरं बुभुक्षित इव त्वरमाणो जिघत्सतीति॥ ❋॥

अथ प्राणः। आत् भगवत एव। तदिच्छया तत्प्रेरणया च। भूमाववतारार्थं मातॄः अञ्जनाकुन्तीमध्यगेहभार्या आविशत्। यास्वाविष्टोऽपि स्वयमा शुचिः गर्भवा-सकृतदोषैरस्पृष्टः, गर्भवासदुःखैरहिंस्यमानश्च व्यवर्धत। वस्तुतस्तूपक्रमानुगु-ण्यादेवं व्याख्येयम्– आदित् भगवदनुग्रहादेव प्राप्तया उर्विया स्वशक्त्या मातॄः सप्तविद्या आविशत्। विद्याजलधौ निमग्नः। तत्राप्यनुक्षणं नवनवापूर्वार्थदर्शनेन शोचति दीप्यत इत्याशुचिः। प्रतिकूलार्थप्रतिपादकैः प्रतिवादिभिः सदाऽहिंस्य-मानः। अज्ञानादिभिर्वा। एवं हि नित्यवृद्धः प्रळयेऽपि प्रतिभातपरावरो वायु-रिति। अश्माखणं हि तं वदन्ति। स्वस्य सप्तविद्याजलधिविरहणं भगवता स्वय-मेवोदितम्–

'इत्यशेषपुराणेभ्यः पञ्चरात्रेभ्य एव च।
'भारताच्चैव वेदेभ्यो महारामायणादपि॥
'परस्परविरोधस्य हानान्निर्णीय तत्वतः।
'युक्त्या बुद्धिबलाच्चैव विष्णोरेव प्रसादतः।
'बहुकल्पानुसारेण मयेयं सत्कथोदिता' इति॥

'तात्पर्यं शास्त्राणां सर्वेषामुत्तमं मया प्रोक्तम् ।
'प्राप्यानुज्ञां विष्णोरेतज्ज्ञात्वैव विष्णुराप्योऽसौ' इति ॥

'कलावेवं व्याकुलिते निर्णयाय प्रचोदितः ।
'हरिणा निर्णयान् वच्मि विजानंस्तत्प्रसादतः ।
'शास्त्रान्तराणि सञ्जानन् वेदांश्चास्य प्रसादतः' इति ॥

'नारायणेनाभिहितो बदर्यां तस्यैव शिष्यो जगदेकभर्तुः ।
'यस्तत्प्रसादाखिलांश्च वेदान् सपञ्चरात्रान् सरहस्यसङ्ग्रहान् ।
'वेदेतिहासांश्च पुराणयुक्तान् यथावदन्या अपि सर्वविद्याः' इति च ॥

'अहं तु तत्प्रसादैकमहास्पदबलोद्धतः' इति च ।

उत्तरार्धमेवं व्याचक्षते– सप्तमातृषु पूर्वाश्चतस्रः ऋगाद्याः । सनातनतया भगवन्तं जुषन्तीति सनाजुवः । अनु उपक्रमोपसंहाराद्यनुसारेण चारश्चारं शनैःशनैररुहत् । नव्यसीष्ववरासु विद्यासु पौरुषेयेषु भारतादिषु निधावते त्वरितमर्थान् विवृणोतीति । तदप्यस्तु, एवं वा व्याख्येयम्– पूर्वाः पूर्वोक्ताः सप्तविद्या सनातनं भगवन्तमेव सदा जुषन्तीति परविद्याभूता अनु उपक्रमाद्यनुगुणं सविमर्शमारोहति । सर्वासामपि परविद्यात्वाविशेषात् । भारतादेरपि 'वेदादप्युत्तमं चक्रे', 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति वेदसमत्वात् । 'ब्रह्माऽपि तन्न जानाति' इति स्फुटवचनात् तत्राप्यन्वारोहस्यैवौचित्यात् । किन्त्ववरास्ववर्वाचीनासु विद्यासु काव्यव्याकरणादिषु निधावत इति ॥ ✻ ॥

अथ नारायणः आदित् स्वेच्छया स्वातन्त्र्येणैव मातॄराविशत् सप्तविद्यामुख्यवेद्यत्वेन । मातॄः श्रीभूदुर्गा वा । तदभिमन्यमानाः प्रकृतिपुरुषकालांश्च व्याप्नोत् । विद्यासु आशुचिः । नित्यशुद्धत्वेन प्रतिपादितः । अहिंस्यमानोऽप्रतिहतगतिः । उर्विया स्वरूपशक्त्यैव सदा वृद्धत्वात् ब्रह्मपदगदित इत्युदितः ।



प्रकृतिपुरुषकालगतोऽपि शुचिरलिप्तः । प्राकृतगतोऽपि तेषु नश्यमानेष्वपि स्वयमनष्ट इत्यहिंस्यमानः । स्वतो नित्यपूर्णश्च । यत् सनातन्यः पूर्वोक्ता विद्या मुख्यप्रतिपाद्यत्वेन अनुगुणमारोहति तस्मादपरविद्यास्वपि नवीनासु स्वयमेव वाच्यत्वेन धावति तिष्ठतीति । य एव वैदिकास्त एव हि प्रायो लौकिकाः शब्दाः ।

यद्ययमेव सर्वशब्दमुख्याभिधेयः सर्वा विद्या अन्वारुरोह कथमथ वायुसूक्तमग्निसूक्तमित्यादिव्यवहारः? अस्यापीदमेवोत्तरम्– नि नव्यसीषु । अवरासु ब्रह्मादिदेवतासु च स्वयमेव धावति गच्छति सन्निधत्त इति तत्तन्मन्त्रैरप्ययमेवोच्यत इति । सत्यं देवताभेदेन मन्त्रभेद इति । तास्वप्ययमेव हि तिष्ठति । तेन देवताप्रतीकभेद एव न मूलतो देवताभेद इति । अग्निरित्यग्निप्रतीको नारायणः । वायुरिति वायुप्रतीकः । 'अभिव्यक्तेरित्याश्मरथ्यः' इत्यादि च वेदान्तसूत्रम् ॥ ५ ॥

**(सं.भा.)** आदित् तस्मादेव भगवदनुग्रहात् । मातॄः अञ्जनाद्याः । ऋगाद्या वा सप्तविद्याः प्राविशत् । यासु प्रविष्टोऽपि आशुचिः । गर्भदोषैरस्पृष्टः । विद्यासु चापूर्वार्थानां दर्शनेन प्रदर्शनेन च दीप्तः । गर्भदुःखैरहिंस्यमानः । वादेषु प्रतिवादिभिर्हिंसितोऽपि निर्विकार इत्यहिंस्यमानः । उर्विया स्वशक्त्या वर्धते स्म । सदा भगवन्तं जुषन्तीति सनाजुवः पूर्वाः पुरातनीः सप्तविद्याः उपक्रमाद्यनुगुणमारोहति । सविमर्शं चिन्तयति । नवीनासु अपरविद्यासु नितरां धावते । अनायासेन सत्वरमर्थं विवृणोतीति ॥ ५ ॥ १ ॥

**॥ इति प्रथमो वर्ग्गः ॥**

**आदिद्धोतारंवृणतेदिविष्टिषुभगमिवपपृचानासऽऋञ्जते ।**
**देवान्यत्क्रत्वामज्मनापुरुष्टुतोमर्त्तंशंसंविश्वधावेतिधायसे ॥ ६ ॥**

**आत् । इत् । होतारम् । वृणते । दिविष्टिषु । भगम्+इव । पपृचानासः । ऋञ्जते ॥ देवान् । यत् । क्रत्वा । मज्मना । पुरु+स्तुतः । मर्त्तम् । शंसम् । विश्वधा । वेति । धायसे ॥ ६ ॥**

दिविष्टिषु स्वर्गेच्छया क्रियमाणेषु द्योतमानेषु वा यज्ञेषु होतारं देवानामाह्वातरं अग्निम्। आदित् तस्मादेव कारणात् देवानस्मदर्थं आहूयास्मत्प्रत्तं हविस्तान् प्रतियातयतीति हेतोर्यजमाना वृणते सम्भजन्ते। 'अग्निर्वै देवानां होता' इति श्रुतेर्देवहोतारं विशेषतश्च होतृसंस्थमग्निं सेवन्ते वा। भाग्येन सम्पिपृक्षवः भगमिव भाग्यवन्तं राजादिकमिव, आदित्यमिव वा, एतमग्निमृञ्जते वृञ्जते छन्दयन्तीत्येतत्।

पुरुभिः पुरुधा स्तुतोऽयमग्निर्यजमानदत्तं हविरादिकं क्रत्वा क्रतुना निमित्तेन तत्स-मेधितेन मज्मना बलेन च देवान् यत् अयातयत्। कर्मणा वा तं यजमानं देवान् प्रत्ययातयत्। मर्त्यकृतं च शस्त्रशंसनं बहुधा वेति कामयते धायसे हविराद्यन्ना-र्थमिति। 'वी गतिप्रजनकान्त्यसनखादनेषु' ॥ ❋ ॥

अथ प्राणः। अत्रेयं व्यवस्था। प्रथमवर्गे पञ्चात्मनः प्राणस्यावतारास्त्रयो न्यरू-पिषत। द्वितीयवर्गे च प्रथमे त्रयो मन्त्रा एको भागः। अपरे पञ्चापरः। प्रथम-त्रिके तावदवतारत्रयसम्बद्धाः काश्चन कथाः संसूच्यन्ते। उत्तरैः पञ्चभिः पुनः पञ्चात्मा प्राणः प्रस्तूयत इति।

दिविष्टिषु वीजिगीषया क्रियमाणेषु युद्धाख्ययज्ञेषु राक्षसाख्यपशुहोतारं हनुम-न्तम्, कौरवपृतनाख्यपशुहोतारं भीमसेनं च शत्रवः वृणत आवारयन्ति। तद-प्यादित् भगवत्सङ्कल्पादेव। ज्ञानयुद्धेषु चाऽह्वातारं मध्वं मिथ्यात्ववादिनो वृणते। कथम्? पपृचानासः अल्पतमेन प्रकाशेन सम्पृक्ताः शलभा भगं सूर्य-मिव। तत् तेषां परिपन्थितासाहसं च स एव ऋञ्जते प्रेरयति। भर्जयति वा। 'ऋजि भर्जने', प्रेरणे चेति वक्तव्यम्। 'ऋञ्जसे प्रेरयसि' इति हि महानाम्नी-भाष्यम्। पपृचानासः सम्पृक्ताः समेत्य समागता इति वा।

पुरुष्टुतो वायुः क्रत्वा ज्ञानेन मज्मना बलेन च देवान् यत् अयत् अगच्छदिति। बलज्ञानसारो हि वायुः प्रस्तुतः बळिति दर्शतमिति च। तेषु गतस्तानृञ्जते प्रेरयति चेति वा। हनुमदवतारे देवानिति देवपक्षीयान् देवांशजान् कपीन्। भीमावतारे युधिष्ठिरादीन्। मध्वावतारे ज्ञानिनः सज्जनान्। दिवु क्रीडेत्यादेः।



धायसेऽन्नपानादिनिमित्तं 'शत्रून् हत्वा नोऽन्नपानवतोऽकृथाः' इति मर्त्यैः कृतां प्रशंसाम्। दुःशासनवक्षोविदारणद्रुतरुधिरधयननिमित्तं वा लब्धां प्रशंसां वेति गच्छति प्राप्नोत्यनुमन्यते च। धेट् पाने। धायसे धारणार्थं वा कृतां प्रशंसाम्। विश्वधा विश्वधारकः। बहुधा वा।

क्रत्वा ज्ञानेन देवान् विजिगीषून् पद्मतीर्थादीन् मज्मना बलेन वा विजिगीषून् 'कोडिञाडि'प्रभृतीन् यत् अयत् प्रतियातयति। तदप्यादित् भगवत्प्रसाद-बलादेव। अत एव ज्ञाने बले च पुरुभिर्देवैरपि पुरुधा स्तुतः। मर्त्यमपि प्रशंसनं बहुधा वेति गच्छति। मर्त्यैरपि बहुधा स्तुतः। विश्वधारको वा विश्वधा। विश्वं वा भगवन्तं हृदि धत्त इति। किमनेन विजयेन तस्य स्वं फलम्? न किमपि। किन्तु धायसे। लोकधारणार्थं तत्वज्ञानस्थापनेन॥ ❋ ॥

अथ नारायणः। इन्द्रियाग्निषु विषयहोतारं हृषीकेशमेव ज्ञानिनो दिव्येषु यज्ञेषु इज्यत्वेन वृणते। धनधान्यादिना सम्पिपृक्षवः कश्चन भाग्यवन्तमिभ्यमिव। अयमेव च तांस्तांस्तथातथा प्रेरयति।

आदित् भगवन्निमित्तादेव होतारमग्निं प्रतीकं वृणते यज्ञेषु। यथा गायत्रीजपयज्ञे भगमादित्यं प्रतीकं वृणत इति वा। ये च पपृचानासः संयतास्तपस्विनस्तानपि तत्रायमेव ऋञ्जते प्रेरयति। 'पृच संयमने'। तपस्विनोऽप्येतमेव तपसा ऋञ्जते प्रसाधयन्तीति वा। ऋञ्जतिं प्रसाधनकर्माणमाह यास्कः। प्राप्नुवन्तीति वा। 'सम-स्मिन्नृञ्जते गिरः' (ऋ.१.६.९) इति प्रयोगदर्शनात्। 'अस्मिन् गिरः प्राप्नु-वन्ति सम्यक् परममुख्यतः' इति च भाष्यम्।

योगार्थसम्पृक्ताः सर्वेऽपि शब्दा एतमेव ऋञ्जत इति वा। एतेन ऋञ्जतिः प्राप्ति-कर्मेति विज्ञायते। तदेवमृञ्जत इति क्वचिद् बहुवचनरूपं च भवति। तिङां तिङो भवन्तीति वक्तव्यम् (७.१.३९) इति वार्तिकादेकवचनं बहुवचनार्थे वा। तद्यथा 'चषालं ये अश्वयूपाय तक्षति' (ऋ.१.१६२.६) इति, तक्षन्तीति प्राप्ते। सर्वे वेदा एतमेव ऋञ्जत इति परिस्फुटमाह– पुरुष्टुतः पुरुभिर्वेदैः स्तुतः। नन्वग्न्यादयः

स्तूयन्ते? उक्तं प्रतीकभूतास्त इतीत्याह– देवान्। क्रत्वा ज्ञानेन, 'स क्रतुर्ज्ञानरूपत्वात्' इति प्राचीनम्। क्रियतेऽनेनेति हि क्रतुः। करणात् क्रं कर्म। ततस्तारयतीति वा। ज्ञानपूर्वं हि क्रियते। विद्यया च विमुच्यते। कर्तृत्वशक्तिर्वा क्रतुः। मज्मना बलेन च। मज्जन्त्यस्मिन् शत्रव इति। सर्वानग्न्यादिदेवान् यत् याति। अतस्तद्गतः स एव स्तूयते। 'स्वाभाविकी ज्ञानबलक्रिया च' इति च श्रुतिः। मर्त्यं शंसं पौरुषेयं शब्दजातमपि जगद्धारको वायुधारको वा स एव सर्वात्मना वेति गच्छति प्रतिपाद्यत्वेन। किमिति सर्वत्र गच्छति? धायसे। तत्रतत्र तत्तच्छुभपानाय लीलया लोकधारणाय च। 'विश्वो वायुः समुद्दिष्टः' इति प्राचीनम्॥ ६॥

**(सं.भा.)** आदित् तस्मादेव भगवत्सङ्कल्पात्, ज्ञानेन स्तुत्या वा पपृचानासः सम्पृक्ताः स्तुवन्तो ज्ञानिनो वा भगवन्तमिव, धनेन सम्पिपृक्षवो भाग्यवन्तं धनिनमिव वा, दिविष्टिषु ज्ञानयज्ञेषु होतारमाह्वातारं मध्वं स्तुवन्तः ऋञ्जते प्राप्नुवन्ति वृणते च तं ज्ञानपिपासवः। यत् यस्मात् क्रत्वा ज्ञानेन मज्मना बलेन च देवान् वेति गच्छति तस्मात् पुरुभिः पुरुधा स्तुतः। न केवलं देवान्, शंसनीयं सात्विकं मर्त्यं च क्रत्वा मज्मना विश्वधा सर्वथा याति। धायसे सतां भगवद्गुणपानाय॥ ६॥

**वियदस्थाद्यजतोवातचोदितोह्वारोनवक्ताजरणाऽअनाकृतः।**
**तस्यपत्मन्दक्षुषःकृष्णजंहसश्शुचिजन्मनोरजऽआव्यध्वनः॥ ७॥**

**वि। यत्। अस्थात्। यजतः। वात+चोदितः। ह्वारः। न। वक्वा। जरणाः। अनाकृतः॥ तस्य। पत्मन्। धक्षुषः। कृष्ण+जंहसः। शुचि+जन्मनः। रजः। आ। वि+अध्वनः॥ ७॥**

व्यजनोद्धतवातचोदितो यजनीयोऽग्निः अनाकृतः अप्रतिहतः सन् विविधज्वालाभिरूर्ध्वं वितिष्ठते। क इव? जरणाः अपकर्षवचनानि वक्वा वदन् शत्रूणां दोषमुद्घाटयन् ह्वारो न शूर इव। यो ह्वरति युद्धाय सन्तिष्ठते। विविधमार्गान् युद्धेषु



चरति वा। ह्वृ कौटिल्ये वरणे च। यत् यदा एवं वितिष्ठते तदा तस्य अग्नेः पत्मन् पथि रजः पुण्यलोकः आ अस्थात् आस्थितः। पुण्यलोकाध्वना सञ्चरन् यजमानमपि पुण्यलोकं नयतीति। कीदृशस्य तस्य? धक्षुषः दिधक्षोः हविरादेः। सर्वदाहकस्य वा। दुरितानां वा। कृष्णं तमो हन्तीति कृष्णजंहास्तस्य। अरण्योर्मन्त्रपूर्वं जातत्वाच्छुचिजन्मनः। विविधाश्च यस्याध्वानः। यस्य ज्वालाजालानि सर्वतोदिशं परितः पतन्ति। यश्च विविधकर्मभिः कर्मिणस्तत्तदनुगुणं विविधलोकान् नयति। वियध्वन इनि विश्लेषेण छन्दःपूर्तिः॥ ✻॥

अथ प्राणः। हनुमदवतारे वातेन हनुमता प्रेरितः, यजतः रामेण सङ्गतः सुग्रीवः व्यस्थित विशिष्टोऽभवत्। कपिराजपदवीलाभेन विराजमानः। जरणाः परुषवचनानि वदन् वाली ह्वारः रावण इवानाकृतो निराकृतः। कुटिल इवाऽचरन् वाली वा। स्वतस्त्वकुटिल इन्द्रांशत्वादितीवार्थकेन नञाऽह।

लङ्कां धक्षुषः, तमोगुणनाशकस्य, गर्भवासकृतदोषविरहेण शुचिजन्मनः अवतारेषु मूलरूपे च नित्यशुचेर्विष्णोर्जातस्य, लङ्कामुत्पतितुं विविधमार्गचरस्य तस्योत्पतनसमये वेगातिशयाद् भूस्थं रजः सर्वमम्बरमाववारेति। तेन रजोऽन्धकारो वा व्यापृतः। गमनसमये राक्षसराजं प्रति तस्य रजः क्रोधः समुद्भूत इति वा। 'काम एष क्रोध एष रजोगुणसमुद्भवः' इति गीतासु। कार्यकारणयोरभेदोपचारः॥ ✻॥

वातेन भीमेन चोदितः यजतः कृष्णेन सङ्गतः अर्जुनः। 'यज देवपूजासङ्गतिकरणदानेषु'। युद्धेषु विजयमानस्तिष्ठति। कृष्णस्य कृष्णपक्षीयाणां च निन्दावचनानि वदन् कर्णः ह्वारो न कुटिलो दुर्योधनादिरिव निराकृतः। स्वयं सूर्यांशत्वादकुटिलोऽपि कुटिल इव स्थित इति वा।

यस्मादेवं स कृष्णानुग्रहपात्रं तस्मात् कौरवपृतना धक्षुषः, श्रीकृष्णस्य पन्थानमनुपततः। जङ्घन्यत इति जंहाः। 'हन गतौ'। शुचिजन्मनः। गदायुद्धेषु विविधान् मार्गांश्चरतस्तस्य मार्गे रज आस्थात्। युद्धरङ्गस्य धूलिधूसरतया शत्रवस्तं द्रष्टुमपि न शेकुरिति॥ ✻॥

वातेन च मध्वेन चोदितः यजतो यजन् विष्णुतीर्थः विराजमानस्तिष्ठति। जरणाः आक्षेपवचनानि वदन् जराघटितगोत्रः कुटिलः पद्मतीर्थादिरिव निराकृतः। यद्यपि 'जॄ वयोहानौ' इति पठ्यते। परन्तु जरितारः स्तोतार इति तु वेदेषु बहुधा प्रयुक्तोऽर्थः। तेनैवं पठनीयम्– 'जॄ वयोहानौ शब्दे च' इति। शब्दश्च द्विविधो भवति स्तुतिरूपो निन्दारूपश्च। जृणातीति स्तौतीति च निन्दतीति च भवति। बाहुल्येन स्तुत्यर्थे जृणातिः प्रयुज्यते। क्वचिन्निन्दार्थे च। अत एव भाषायां 'ಜರೆಯುವುದು' इति निन्दावचनं वदन्ति। तदिदं मूलतो जृणातेरेव निष्पन्नमिति शब्दतत्वविद्भिर्विभावनीयम्।

प्रतितर्काशुशुक्षणिना प्रतिवादिनो दिधक्षतः, प्रतिष्ठार्थं कृष्णप्रतीकं प्रति गच्छतः, गर्भवासराहित्येन शुचिजन्मनः आ हिमाद्रेरा कन्यातीर्थं विविधक्षेत्रेषु विचरतस्तस्य पत्मन् पथि रजः रञ्जनीयं ब्रह्मैव सर्वत्र रक्षकतयाऽऽसीत्। अथ च तस्य पत्मन् पदपद्मे यद्रजः तदा समन्तात् विराजमानमस्थात्। तथाहि पण्डिताचार्याः– 'यत्पादपद्मरजसा शिरसा धृतेन सद्यः प्रयान्ति परिशुद्धिमशेषलोकाः' इति। '–श्रीमदानन्दतीर्थत्रैलोक्याचार्यपादोज्ज्वलजलजलसत्पांसवोऽस्मान् पुनन्तु' इति च॥ ❊ ॥

अथ नारायणः। वातचोदितो भगवान्। 'वरदो वायुवाहनः' इति स्मरणात्। 'यस्मिन्नुत्क्रान्त उत्क्रमिष्यामि' इत्यादेश्च। यजतः सर्वैरपि यजनीयो मुख्यतः। यज्ञेषु ततश्च। यजनततो हि यजतो भवति। सर्वयज्ञभोक्ता च प्रभुश्च। सर्वदाऽपि विशिष्टो विलक्षणश्च तिष्ठति। विविधरूपश्च भवति। रामावतारे लङ्कां प्रति सन्तिष्ठते। कृष्णत्वे च सारथ्येन पार्थमुपतिष्ठते। अथ कलियुगे प्रतिमागतो द्वारकातो रूप्यपीठपुरीं प्रतिष्ठते। एवं विविधलीलाः कुर्वन्नस्थात्। सर्वदेहेषु च प्राणेन सह वितिष्ठते।

ह्वारो न कुटिलं चरन् क्रिमिरिव निन्दावचनान्युद्गिरन् जनोऽनेन अनाकृतः। तमः पातनेन निराकृतः। ह्वारः कुटिलस्तामस इव दुर्योधनादिरप्यनेनैव निराकृत इति च॥



सर्वसंहारकस्य तमोनाशकस्य। कृष्णं तमः। 'अजामेकां लोहितशुक्लकृष्णाम्' इति हि वदन्ति। हन हिंसायाम्। अविद्या वा कृष्णं तमः। कृष्णेन वेदव्यासेन वा सङ्गतस्य। कृष्णेनार्जुनेन वा सह गच्छतः सारथित्वेन। 'विष्णौ व्यासेऽर्जुने कृष्णः' इत्यभिधानम्। सर्वावतारेष्वपि नित्यशुद्धस्य। 'निरनिष्टो निरवद्यः' इत्यादेः। अथाप्यापिपीलिकं सर्वदेहेषु विविधं चरतः पत्मन् पदतळे रजः सर्वोऽपि लोको रजःस्थानीय आस्थादिति। 'समूळ्हमस्य पांसुरे' इति हि श्रुतिः। 'रमन्ति पांसवो यत्र पांसुरं पदमीरितम्' इति च भाष्यम्। 'पांसवो लोकाः' इति यास्कः। सृतिमोक्षतमआदिभेदेन विविधा जीवाध्वानो यस्मादिति वा॥ ७॥

**(सं.भा.)** यत् यदा वातेन सुपथे प्रेरितस्तदा यजतः भगवद्याजकः सन् विराजमानस्तिष्ठति। भगवतो वायोश्च जरणाः निन्दावचनानि वक्ता वदन् ह्वारो न कुटिलगामी रावणादिरिव अनाकृतः देवयानान्निराकृतो भवति। धक्षुषः लङ्कां दिधक्षोः। जङ्घन्यत इति जंहाः पद्धतिः। कृष्णजंहसः श्रीकृष्णदर्शितं पन्थानमनुपततः, गर्भदोषविरहात् शुचिजन्मनः व्यध्वनः लोकधारणार्थं विहायसि चरतः विष्णौ वा विशेषतश्चरतः तस्य त्रिरूपस्य मुख्यप्राणस्य पत्मन् पदपद्मे यद् रजः तदा समन्तात् सज्जनव्रातं विशोधयत् स्थितमिति॥ ७॥

**रथो॒नया॒तश्शिक्व॑भिःकृ॒तोद्यामङ्गे॑भिरअरु॒षे॑भि॑रीयते ।**
**आद॑स्य॒तेकृ॒ष्णासो॑दक्षिसू॒रय॒श्शूर॑स्येवत्वे॒षथा॑दीषते॒वयः॑ ॥ ८ ॥**

**रथ॑ः । न । या॒तः । शिक्व॑+भिः । कृ॒तः । द्याम् । अङ्गे॑भिः । अ॒रु॒षेभि॑ः । ई॒य॒ते ॥ आत् । अ॒स्य॒ । ते । कृ॒ष्णास॑ः । ध॒क्षि॒ । सू॒रय॑ः । शूर॑स्य+इव । त्वे॒षथा॑त् । ई॒ष॒ते॒ । वय॑ः ॥ ८ ॥**

शिक्वभिरिति विश्लेषेण चतुरक्षरत्वे, द्यामिति द्व्यक्षरत्वेऽपि प्रथमपाद एकाक्षरन्यूनेयं निचृज्जगती।

दावाग्निः स्तूयते। शक्नुवन्तीति शिक्वभिः दारुफलकैः कृतो दृढीकृतो यातश्चलन् रथइव अरुषेभिररुणवर्णैः ज्वालारूपैरङ्गैरग्निर्द्यामन्तरिक्षमीयते गच्छति। ईङ् गतौ। आदनन्तरमस्य सूरयः सुष्ठूरीकरणात् ज्वलनमार्गाः धूमावरणेन कृष्णासः

कृष्णवर्णा भवन्ति । तथाचायं तरुषण्डं धक्षि दिधक्षति । अस्य त्वेषथात् दीप्तेः गगनव्यापिन्याः वयः गगनगामिनः खगाः ईषते इतस्ततः धावन्ति । यथा शूरस्य त्वेषथात् युद्धे प्रतिपक्षस्य वयोऽश्वा भयादीषते । ईष परिचलने । यद्यपीषन्त इति वक्तव्यम् । अथापि पलायन ऐककण्ठ्यद्योतनायैकवचनप्रयोगः । 'तिङां तिङो भवन्तीति वक्तव्यम्' इति चोक्तम् । अदादिगणीयो वेषधातुः पठनीयः । वयः पक्षिसमुदाय इति वा । वान्तीत्यश्वा अपि वयो भवन्ति ॥ ॐ ॥

अथ प्राणः । शिक्वभिरात्मशक्तिभिर्दृढीकृतो रथ इव वायोर्भगवद्वाहनत्वात् । सर्वत्र शरीरेषु भगवन्तं वहन्नदृश्यतया स्थितः । अथाप्यरुणवर्णैः प्रकाशमानैरवयवैर्द्यां गच्छति । द्युलोकगतैः प्रत्यक्षतया दृग्गोचरीभवति ।

अथ युद्धे रथस्थिते रावणे रथइव यातो रामस्य हनुमान्, तं स्वस्कन्धे वहन् । आकाशं व्याप च तद्देहकान्तिः । अस्य सूरयः सुष्ठूरीकुर्वन्ति प्रतियुद्धमिति राक्षसभटाः कृष्णासस्तमोग्रस्ता म्लानमुखा आसन् । तथाऽयं तान् स्वतेजसा धक्षि दहति स्म । अथ चेन्द्रजिता युद्धे कृष्णासः तमोवृताः प्राप्तमोहाः सूरयः कपयः दक्षि दक्षिणं यथा स्यात् तथा अस्यैव सकाशात् ईषन्ते उद्गच्छन्ति । तर्हि नागपाशमोचनाय किमिति गरुड आजगाम । आह–शूरस्येव । यथा कस्यचिच्छूरस्य दीप्त्याऽन्ये तदनुयायिनः सधैर्यमीषन्ते तथा वयः पक्षी गरुडोऽपि अस्य त्वेषथादेवेषते । गरुडेन यदकारि तदप्यस्यैवानुग्रहादिति । अस्यापि तत्सामर्थ्यमात् भगवदनुग्रहादिति ॥ ॐ ॥

भीमः परिचलन् रथइव यातः । यथैकसम्पातेन बहवो भग्नाङ्गा भवेयुः । अस्यैव सामर्थ्यात् ते सूरयो द्रोणाद्या अपि कृष्णासस्तमोवृता आसन् । तथाऽयं दक्षि दहति शत्रून् । यथा कृष्णास्तमोवृताः सन्त ईषन्तेऽपगच्छन्ति रणाङ्गणात् तथाऽनेन दक्षि अदक्षि दाक्ष्यं प्रादर्शीति वा ।

शूरस्य सिंहस्य त्वेषथाद्वयः पक्षिणः क्षुद्रमृगा इव अवय इवेति वा, उरभ्रा इव, अस्य त्वेषथादन्ये वयः विरोद्धारः पलायन्ते । शूरस्य कृष्णस्येति वा । शूरस्यार्जुनस्य वा त्वेषथादीषन्ते पलायन्त इति ॥ ॐ ॥



शक्तिभिर्दृढीकृतः सतां मनोरथ इव यातः मध्वः । द्युलोकगीतयशाः । अस्य द्वात्रिंशल्लक्षणलक्षितमङ्गसौन्दर्यं दिवि देवैरपि गीयते । 'भाति गन्धर्वगीतं प्रत्येकं देवसंसत्स्वपि तव भगवन्नर्तितद्योवधूषु' इति हि पण्डिताचार्याः । सूरयः सर्वेऽपि वादविजिताः तमोहताः कृताः । तथा तान् तर्कज्वलनेन दहति । तथा तेऽदक्षिषत वा । आयोधनशूरस्येव वादशूरस्यास्य त्वेषथादेव वयो विरोद्धार ईषन्ते पलायन्त इति ॥ ॐ ॥

अथ नारायणः । अयं देहोऽस्थिभिर्दृढीकृतो रथइव चलति । 'शरीरं रथमेव च' इति हि वदन्ति । तत्र द्यामाकाशमङ्गैररुणैर्याति । 'प्रोद्यदादित्यवर्णश्च' इत्यादेः । हृदयाकाशे तथा ध्यातव्य इत्येतत् । अस्य सूरयो ज्ञानिनः कृष्णासः सकलपापकर्षकाः । यतस्तेषां पापानि स्वयमयमेव दहति । शूरस्य त्वेषथाद्यथा जगदीषते तथा सर्वे विशिष्टाः ब्रह्मादयोऽप्यस्य त्वेषथादेवेषन्ते । 'यदादित्यगतं तेजः' इत्यादेः ॥ ८ ॥

**(सं.भा.)** शिक्वभिः स्वशक्तिभिर्दृढीकृतः भगवतो रथइव यातो वायुः । वायुवाहनो हि भगवान् । अरुणवर्णैरङ्गैः द्युलोकं व्याप्नोति । रामस्य रथइव यातो हनुमान् । अस्य प्रतिवादिनः सूरयः सर्वेऽपि वादविजिताः कृष्णासः निस्तेजसो दक्षि अदह्यन्त । युद्धशूरस्येव ज्ञानशूरस्यास्य त्वेषथात् ज्ञानदीप्तेः वयः ज्ञानिसमुदायः ईषते चलति भगवतः पथीति ॥ ८ ॥

**त्व॒याह्य॑ग्ने॒वरु॑णोधृ॒तव्र॑तोमि॒त्रश्शा॑शद्रेअ॑र्य्यमासु॒दान॑वः ।**
**यत्सी॒मनु॒क्रतु॑नावि॒श्वथा॑वि॒भुर॒रान्नने॒मिःप॑रि॒भूरजा॑यथाः ॥ ९ ॥**

**त्वया॑ । हि । अ॒ग्ने॒ । वरु॑णः । धृ॒तः+व्र॑तः । मि॒त्रः । शा॒श॒द्रे । अ॒र्य्य॒मा । सु॒+दान॑वः ॥ यत् । सी॒म् । अनु॑ । क्रतु॑ना । वि॒श्व+था॑ । वि॒+भुः । अ॒रान् । न । ने॒मिः । प॒रि॒+भूः । अजा॑यथाः ॥ ९ ॥**

प्रथमवर्गेऽवतारत्रयं वायोर्वर्णितम्। द्वितीये त्रिभिर्मन्त्रैरवतारकथाः सङ्गृहीताः। पुनरवशिष्टैः पञ्चभिः पञ्चात्मानौ वायुनारायणौ स्तूयेते इति संश्लिष्टम्।

अत्र 'हि अग्ने' इति विश्लेषेण जागतत्वम्।

अग्निः कथम्? यास्कस्त्वेवमाह– 'अग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयते, अङ्गं नयति सन्नममानः। अक्नोपनो भवतीति स्थौलाष्ठीविः। न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। इतात्, अक्ताद्, दग्धाद्वा, नीतात्। स खल्वेतेरकारमादत्ते। गकारमनक्तेर्वा दहतेर्वा। नीः परः' इति। आचार्यास्त्वर्थान्तराण्यप्याचक्षते–

'अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद् भवेत्।
'एवमेवाऽह भगवान् निरुक्तिं बादरायणः॥

'यथैवाग्र्यादयः शब्दाः प्रवर्तन्ते जनार्दने।
'तथा निरुक्तिं वक्ष्यामो ज्ञानिनां ज्ञानवृद्धये॥

'इति तेनाग्निशब्दोऽयमग्र एवाभिपूज्यताम्।
'अग्र्यत्वमग्रनेतृत्वमत्तिमङ्गागनेतृताम्। आह' –इति।

अग्रणीः सर्वनायको भवति, अग्रे स्थाने नीयत इति। यतोऽग्रे नीयते तत एवाग्रे प्रणीयते– 'अग्निमीळे' इति। यज्ञेष्वप्यग्रं प्रणीयत इत्यग्रपूजामर्हतीति अग्निरग्र एवाभिपूज्यः। यस्त्वग्रे भवति यदा किमपि न भवति स चाग्निः। 'नैवेह किञ्चनाग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्' इत्यादेः। अग्रं स्थानमग्रान् देवानपि नयतीति चाग्निः। अत्ति सर्वमिति चाऽग्निः। 'सर्वं वा अत्तीति तददितेरदितित्वम्' इति। अङ्गमङ्गं नयति स्वतोऽगं जडं च नयति। सर्वेऽप्येतेऽर्था भगवति कृतार्था वायावग्नौ च यथार्था भवन्ति यावदर्थाः।



धृतव्रतो वरुणो मित्रश्चार्यमा च। रात्रिमानी ध्यानमानी च वरुणः। अहर्मानी सङ्कल्पमानी च मित्रः। अर्यमा सन्ध्यामानी चानुसन्धानमानी च। तत्तन्नियमनमेव तेषां व्रतम्। त इमे त्रयस्त्वयाऽग्निना सहकारिणा सुदानशीला अभवन्। भक्तानामभीष्टदानशीलाः। भवत्वग्निना मित्रश्चार्यमा च सुदानू। अग्नेरवमत्वात्। सप्तदशकक्ष्यापठितो मित्रः। अष्टादश्यां च कक्ष्यायामर्यमा। अग्निश्च पञ्चदशः। तेन युक्तमनेन तौ दित्सत इति। वरुणस्तु वरः। त्रयोदशो हि सः। तं कथमग्निः प्रणुत्सीष्ट स्वेषु व्रतेषु? सत्यम्। नह्ययमग्निना नुत्तः प्रवर्तत इत्यवादिष्म। किन्तु सहकृत इति। यथा दण्डसहकृतश्चलति। अग्निर्यजमानहुता आहुतीस्तं प्रणयेत्। प्रणीय च तं प्रीणयेत्। सोऽयं सहकारो नाम। अपि च वरुणनियम्यायां रात्रावग्निनैव दीपितेन सर्वव्यवहारनिर्वाहः। ध्यानं च सोमसूर्याग्निमण्डले। तारतम्यक्रमनिर्दिदिक्षयैव वरुणमादित उपादत्त। ततो मित्रं चार्यमणं च देवम्।

शशद्र इत्यग्निं सम्बोध्याऽवर्जयति। तेन सम्भावयति तस्य वरुणसहकारिताम्। तथाहि शशो भगवान्। अतिशयानन्दरूपत्वात्। शमश्नाति वा। तेनाऽद्रियते स्वीक्रियते भूस्थाने प्रतीकतयेति। तेन युक्तं भगवत्सन्निधानसमेधितसामर्थ्यस्यावमस्याप्युत्तमसहकरणमिति। क्रतुना यज्ञेन सीम् सर्वतः विश्वथा सर्वथा च त्वं विभुः प्राप्तशक्तिर्व्याप्तिवैभवश्चाभवः। क्रतुना ज्ञानमयेन वा नारायणेन। यज्ञेन हि वरुणाद्याः प्रीयन्ते। स चाग्निनिघ्न इति निराबाधमेव सहकरणमग्नेः। अरान् परितो भवन् यथा नेमिर्द्रढयति चक्रं प्रधिः। तथा त्वमपि परितो भवन् यज्ञचक्रं विश्वचक्रं वा द्रढयन्नजायथा व्यानङ्क्थेति। 'एवं प्रवर्तितं चक्रम्' इति हि गीतासु। 'अग्ने यँय्यज्ञमध्वरं विश्वतः परिभूरसि' इति चोक्तं पुरस्तात्। 'सीमिति परिग्रहार्थीयः। स सीमादित्यः असृजत् प्रासृजत् सर्वत इति' इति यास्कः॥ ✻॥

अथ प्राणः। अग्निः कस्मात्? पूर्वोक्तैरेव हेतुभिः। हे वायो, त्वया हि वरुणो मित्रोऽर्यमा च धृतव्रताः सुदानवश्च। नहि त्वमुपकरणमात्रम्। नियन्ता च

सर्वेषाम्। य एतेषां नियन्तारस्तेषामपि। शाशमाद्रियते स्वयम्। शाशेन चाऽ-द्रियते। शतानन्दो वा शाशः। तेनाप्याद्रियते स्वपदमारोक्ष्यतीति। तं चाप्यय-माद्रियते स्वपूर्वाधिकारीति।

सर्वतः सर्वथा च क्रतुना ज्ञानेन विभुः। अरानिव नेमिः सर्वान् देवान् परितोऽ-रक्षः। अथच वरुण इत्यनिरुद्धः। वृणोति सर्वं जगद्रक्षार्थमिति, न कोऽपि तस्य ततो निरोद्धुमीष्ट इति। अर्यमा सङ्कर्षणः। संसारकर्षणाद्धि सङ्कर्षणः। अर्यते निर्गम्यते संसारादनेनेति च समानोऽर्थः। मित्रः प्रद्युम्नः। प्रमितिं रातीति मित्रः। प्रकृष्टं द्युम्नं ज्ञानमस्मादिति प्रद्युम्नः। तेन चैकार्थ्यम्। 'ज्ञेयम्' इति च भाष्ये प्रद्युम्नपदव्याख्यानं स्फुटम्। त्वया द्वारभूतेन भगवानेतै रूपैः सृष्टिस्थितिसंहारान्, जाग्रत्स्वप्नसुषुप्तीश्च लीलाः करोति। त्वद्द्वारैव चाभीष्टं वितरति। 'स एनान् ब्रह्म गमयति', 'तस्मिन्नपो मातरिश्वा दधाति', 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इत्यादेः॥ *॥

अथ नारायणः। अग्निरिति नारायणः। आवृणोति वासयति सर्वमिति वरुणो वासुदेवः। धृतरक्षाव्रतोऽनिरुद्धः। नारायणरूपादेव वासुदेवाद्या अभिव्यक्ता इत्यनेनोच्यते। तेन पञ्चरूपो नारायणः प्रस्तूयते। पूर्वोक्तः सर्वोऽप्यर्थोऽत्राप्य-नुगम्यते। यदमुख्यतोऽग्नौ तत् मुख्यतो वायौ परममुख्यतो नारायण इति। प्रसिद्धं च वरुणादि नाम तैत्तिरीये– 'शं नो मित्रः शं वरुणः' इत्यादि। तत्र हि पञ्चा-त्मानौ वायुनारायणौ स्तूयेते। इयांस्तु भेदः। तत्रेन्द्रपदेन प्रद्युम्नः प्रस्तुत इति मित्रो नारायण उच्यते। अत्र त्वग्निपदेन नारायणः प्रस्तुत इति मित्रः प्रद्युम्न उच्यते। अथवा चतुर्मूर्तिसमष्टिरग्निरुच्यते। 'चतुर्मूर्तिः स भगवानग्निरित्यभि-धीयते' इत्यैतरेयभाष्यम्।

शाशश्च सर्वैरादृतश्चेति शाशद्रिः। पूर्वोक्तदिशा शाशाभ्यां ब्रह्मवायुभ्यामपि पितृ-त्वेनाऽद्रियत इति वा। अग्निवाय्वादीन् स्वाधिष्ठानत्वेनाऽद्रियते भगवानिति वा। शाशैः मुक्तैरप्याद्रियते वा।



अरान् न नेमिः परिभूरजायथाः। 'अरा इव रथनाभौ यस्मिन् सर्वं प्रतिष्ठितम्' इति श्रुतिः। स एव नाभिः, नेमिश्च। 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारा-यणः स्थितः' इति श्रवणात्। 'कविर्मनीषी परिभूः स्वयम्भूः' इति च श्रुतिः। नेमिरिव सर्वाधारः सर्वं परिभवतीति सर्वोत्तमश्चेति वा। अजायथा वासुदेवा-द्यात्मना॥ ९॥

**(सं.भा.)** अग्ने अङ्गनेतरगनेतर्वायो। वरुणः रात्रिमानी ध्यानमानी च त्वया स्वकर्मणि धृतव्रतो बद्धदीक्षः। मित्रश्चाहर्मानी सङ्कल्पमानी च त्वया तमः शाशद्रे शातयति स्म। अर्यमा च सन्ध्यामानी। एते त्वया नियुक्ता धृतव्रताः सुदानवश्च सुदानशीलाः। यत् यस्मात् सीम् सर्वतः विश्वथा सर्वथा च क्रतुना ज्ञानेन विभुः। अरानिव चक्रनेमिः परितो भवन् तत्तत्प्रतीकेषु तत्तद्रूपमनु जायसे॥ ९॥

**त्वमग्नेशशमानायसुन्वतेरत्नंयविष्ठदेवतातिमिन्वसि।**
**तन्त्वानुनव्यंसहसोयुवन्वयम्भगन्नकारेमहिरत्नधीमहि॥ १०॥**

**त्वम्। अग्ने। शशमानाय। सुन्वते। रत्नम्। यविष्ठ। देव+तातिम्।**
**इन्वसि॥ तम्। त्वा। नु। नव्यम्। सहसः। युवन्। वयम्। भगम्। न।**
**कारे। महि+रत्न। धीमहि॥ १०॥**

यविष्ठ नित्ययुवन्, यजमानस्याभीष्टफलसंयोजकेति वा। यु मिश्रणे। तथा सह-सः अनभिभाव्यत्वस्य युवन् योजक। यदि लब्धमपि फलमभिभूयते ततः किं लाभेनेतीदमाह। योगमिव क्षेममपि त्वमेव निर्वहेरिति। दानदक्षश्च त्वमित्याह– महिरत्न। महत् रत्नं रमणीयं च धनं यस्य यस्माद्वा तादृशः। नव्यं नित्यनूतनं सर्वेड्यं त्वां वयं कारे स्तुतिशब्दे धीमहि स्थापयामः, त्वां स्तुम इत्येतत्। आकार्यते आहूयतेऽनेनेति कारः शब्दः। तद्यथा आकारो ममकारोऽहङ्कार इति। कारे यज्ञाख्ये कर्मणि वा क्रियत इति। कमिव? गायत्रीकारे भगमिव भानुमिव। तत्र यथाऽऽ-दित्यं प्रतीकं धीमहि तथाऽत्र कर्मणि त्वां प्रतीकं धीमहीति वा।

यतो महिरत्नस्त्वं शशमानाय सुन्वते देवतातिं रत्नमिन्वसि । इदमुक्तं भवति । सोमं सुन्वते शशमानाय त्वां च स्तुवते यजमानाय देवेषु ततं देवै रक्षितं वा रत्नं विद्याधनात्मकं वित्तं इन्वसि प्रापयसि ददासीति । देवेषु तायमानं सन्तन्यमानं रत्नं हविराख्यं वा धनमिन्वसि व्याप्नोषि । तायृ सन्तानपालनयोः । इवि व्याप्तौ । 'शशमानः शंसमानः । 'यो वा यज्ञैः शशमानो ह दाशति' इत्यपि निगमो भवति' इति यास्कः । अत्र त्वमिति तुवमिति विश्लेषेण जागतत्वम् ।। ✻ ।।

अथ प्राणः । यविष्ठः कस्मात्? कृतं कर्म भगवतेऽर्पयति तेन च कर्तारं फलेन योजयतीति । युवतमश्च । भगवता सर्वदा युक्तश्च । 'युवा स्यात् साधुयुवाऽध्यायकः' इति श्रवणात् । सहसो युवा कस्मात्? अनभिभाव्यत्वं हि प्राणस्याऽश्माखणस्य सहजो धर्मः । तं भक्तेषु योजयतीति । 'प्राण ओजः सहो बलम्' इति भागवते । 'सहसः+युवन्' इत्येकं पदमिति सुन्दरम्, परन्तु सम्प्रदायज्ञाः पदकाराः पृथक् पठन्ति ।

महिरत्नः कस्मात्? महाधनो भवति । महाज्ञानो भवति । महच्च सुखमस्य भवति । रत्नं हि रतनं रतिः । महच्च सुखं ज्ञानं वाऽस्माद् भवति । महच्च सुखरूपं ब्रह्मास्य साक्षात्समाराध्यं भवति । महतामपि रतिरस्माद् भवति । महद्भिरपि रतिरूपं ब्रह्मानेनैव गम्यते । अतस्तं त्वां स्तुतिशब्दे निधीमहि । आदित्यमिव । भगं नारायणमिव त्वामपि गुरुत्वेन वा । 'यथा देवे तथा गुरौ' इति श्रुतेः ।

यतस्त्वं सुन्वते शशमानाय रत्नमिन्वसि । षुञ् मथने । अन्तरङ्गमथनेन भक्त्या द्रुतमनसे । अत एव मनसा शशमानाय परिज्ञातभगवन्महिमतया भगवन्तमभिधावमानाय । शश प्लुतगतौ । आनन्दमयत्वाच्छशो वा भगवान् । 'ज्ञानज्ञानः सुखसुखः' इत्यादेः । तं मन्यमानः शशमानो भवति । भक्ताय ज्ञानिन इत्येतत् । देवैर्गूढतया वेदेषु रक्षितं भगवद्गुणरत्नं इन्वसि प्रापयसि ज्ञापयसि । रत्नं रतिरूपं भगवन्तमेव वा । चिरत्नं रत्नं स्वरूपभूतं ज्ञानमानन्दमेव वा । आदावपरोक्षज्ञानं प्रापयसि तेन च मोक्षं प्रापयसीति ।। ✻ ।।



अथ भगवान् । यविष्ठः कस्मात्? जीवेन सदा सङ्गत इति । 'द्वा सुपर्णा सयुजा सखाया' इति श्रुतेः । सर्वैर्गुणैर्युक्ततमो वा । पूर्वोक्तं च सर्वमत्र युज्यते । सहसो युवन् स्वतःसिद्धस्य सहोगुणस्य वायावपि संयोजक । सहा इति वायुस्तेन सदा संयुक्त इति वा । महती चास्य रतिः । महदैश्वर्यम् । महतामपि ब्रह्मादीनामित एव सर्वं समृद्ध्यते महच्च रत्नं स्वयम्, तं त्वां वयं ध्यायेम । कीदृशम्? कारे आकारे भगमादित्यमिव । प्रोद्यदादित्यवर्णम् । कारे सर्वकार्येषु त्वामेव धीमहीति वा ।। १० ।।

**(सं.भा.)** यविष्ठ युवतम, नित्ययुवन्, सहसः बलस्य युवन् संयोजक साधकेषु, महिरत्न महासुख, त्वं सुन्वते अभिषुतभक्तिरसाय तेन च शशमानाय भगवन्तं प्रति द्रुतमनसे शंसमानाय वा, भक्तिज्ञानाभ्यामुपासकाय देवै रक्षितं भगवद्गुणरत्नं इन्वसि उपदेशेन प्रापयसि । नव्यं स्तुत्यं त्वां भगं न भगवन्तमिव कारे स्तुतिशब्दे नु इदानीं धीमहि स्थापयामः । भगवन्तं देवत्वेन त्वां च गुरुत्वेन स्तुम इति ।। १० ।।

**अस्मेरयिन्नस्वर्थन्दमूनसम्भगन्दक्षन्नपपृचासिधर्णसिम् ।**
**रश्मीँरिवयोयमतिजन्मनीऽउभेदेवानांशंसमृतऽआचसुक्रतुः ।।**
**।। ११ ।।**

**अस्मेइति । रयिम् । न । सु+अर्थम् । दमूनसम् । भगम् । दक्षम् । न । पपृचासि । धर्णसिम् ।। रश्मीन्+इव । यः । यमति । जन्मनीइति । उभेइति । देवानाम् । शंसम् । ऋते । आ । च । सु+क्रतुः ।। ११ ।।**

अत्र प्रथमपादे एकादशाक्षराणि । तृतीयपादे त्रयोदश । ऊनमधिकेन समीकृतं भवतीति जागतत्वम् । अथ प्रथमपादे सुअर्थमिति क्षैप्रविश्लेषेण द्वादशाक्षरत्वे तृतीयपाद एकमक्षरमधिकमिति भुरिग्जगती भवतीयम् ।

हे अग्ने, सुक्रतुस्त्वम्, त्वया हि क्रतुः शोभनो भवति। अस्मे अस्मासु अस्माकं वा। 'सुपां सुलुक्पूर्वसवर्णाच्छे–' (अ.सू.७.१.३८) इति शे। सुष्ठु प्रार्थनीयं विद्याधनं दमूनसं दमयतीतीन्द्रियनिग्रहसम्पादकं पपृचासि सम्पृणक्षि। रयिं न बाह्यवित्तमिव। उभयमपि ददासि। 'कर्मणा ज्ञानमातनोति' इत्यादेः। अत एव ह्यग्निं दमूनसं वदन्ति। 'दमूना दमुनाः प्राचीनबर्हिः शुचिबर्हिषौ' इति हि नाम-निधाने। अन्तर्भावितण्यर्थात् 'दमेरूनसिः' इति ह्युणादिसूत्रम्। एतेन वित्तैष-णोक्ता। अथ पुत्रैषणामाह– भगं दक्षं न। भजनीयं भाग्यवन्तं वा पुत्रमिव धर्णसिं पशुपुत्रादिधारणशक्तिं च ददासि। धनयोगमुक्त्वा क्षेमं वाऽनेनाऽह। धर्णसिं चिरधारणरूपं क्षेमं पपृचासीति।

रश्मीन् प्रग्रहानिव सारथिर्यो भूलोकेन सहोर्ध्वे चोभे जन्मनी भुवः स्वरिति यमति नियच्छति। यश्च ऋते वेदे पठ्यमानं देवानां शंसं आ समन्तात् यमति श्रावयति तेषु समर्पयति। स त्वं पपृचासीति ॥ ❊ ॥

अथ प्राणः। त्वं रयिं न मोक्षाख्यवित्तमिव तत्साधनं समीचीनमर्थं ज्ञानं च सम्पृ-णक्षि। 'अग्ने नय सुपथा राये' इति श्रवणात्। 'नय मोक्षाख्यवित्ताय' ति च। कीदृशं ज्ञानम्? दमूनसम्। इन्द्रियनिग्राहकं विरक्त्युपेतमित्येतत्। ज्ञानं च वैराग्यं चोक्ते। सम्प्रति भक्तिमाह– भगं न। भग इति भजनं भक्तिरुच्यते। 'आदरो भजनं भक्तिः' इत्यभिधानम्। भगवदनुग्रहसम्पादने दक्षं भगं न भक्तिमिव धर्णसिमुपासनां च निर्वर्तयसि। धर्णसिः कस्मात्? धारणशक्तिर्हि धर्णसिः। उपासना द्विविधा तादृशी। एका शास्त्रधारणरूपा, अपरा मनसि ध्येयस्वरूप-धारणेन ध्यानरूपा। तामिमां द्वयीमप्युपासनां सम्पृणक्षीति। तदुक्तम्–'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी। ध्यानरूपा परा चैव' इति। 'भक्तिर्ज्ञानं च वैराग्यम्' इति प्राणरूपं निरूप्यते।

मितरुक्त्वतो रश्मयो मनुष्याः। तानिव उभे ऋषिदेवजन्मनी च नियमयति। देवानां वेदे शंसं च स्वयमायमति। सर्वचेष्टकत्वात्। तेन सुक्रतुः सर्वक्रतुनिर्वर्त-कः सर्वकर्मा सर्वज्ञानश्चेति ॥ ❊ ॥



अथ भगवान्। यद्वायावुक्तं तन्मुख्यतो भगवति। 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति हि स्मरन्ति। देवानां सर्वाणि नामानि स्वयमायमति। 'यो देवानां नामध एक एव' इत्यादेः ॥ ११ ॥

**(सं.भा.)** अस्मासु रयिं न वित्तमिव मोक्षाख्यं समीचीनमर्थम्, ऋ गताविति धातोः अर्यत इति ज्ञानाख्यं वा पपृचासि सम्यग् योजयसि। दमयतीति दमूनाः, इन्द्रियनिग्रहसम्पादकम्। वैराग्यसहकृतं ज्ञानमित्येतत्। भगवत्प्रीणनदक्षं भगं न भजनमिव भक्तिमिव धर्णसिं धारणशक्तिं पपृचासि सम्पृणक्षि। मनसि शास्त्रधारणं प्रथमम्। ध्यानरूपं द्वितीयम्। यः रश्मीन् मितरुचो मनुष्यान् यथा तथा उभे जन्मनी देवानामृषीणां च अन्तरिक्षाणां दिव्यानां च वा, यमयति। ऋते वेदे देवानां शंसनं च स्वयमायच्छति स त्वं सुक्रतुः क्रतुनिर्वर्तकः सर्वज्ञानः सर्वकर्मा चेति ॥ ११ ॥

**उ॒तनः॑स्सु॒द्योत्मा॑जी॒राश्वो॒होता॑म॒न्द्रश्शृ॑णवच्च॒न्द्रर॑थः ।**
**सनो॑नेष॒न्नेष॑तमै॒रमू॑रो॒ग्निर्वा॒मं॑सु॒वि॒तंवस्यो॒ऽअच्छ॑ ॥ १२ ॥**

**उ॒त । नः॒ । सु॒+द्योत्मा॑ । जी॒र+अ॑श्वः । होता॑ । म॒न्द्रः । शृ॒ण॒व॒त् । च॒न्द्र+र॑थः ॥ सः । नः॒ । ने॒ष॒त् । नेष॑+तमैः । अमू॑रः । अ॒ग्निः । वा॒मम् । सु॒वि॒तम् । वस्यः॑ । अच्छ॑ ॥ १२ ॥**

अत्र प्रथमपादे 'सुदियोत्मा' इति 'जीराशुवो–'इति विश्लेषेणैकादशा-क्षरत्वम्। 'अमूरो +अग्निः' इति पादयोर्विश्लेषेणोत्तरार्धमपि त्रैष्टुभम्।

सुद्योत्मा सुद्योतमानः। जवन्त इति जीराः वेगशालिनः। जु गतौ। तादृशा अश्वा यस्य। होतृस्थः देवानामाह्वाता च। हवींष्यदन्नभीष्टं ददच्च। 'हु दानादनयोः'। मन्द्रः सुखकरः। आह्लादकरथः। स्वर्णमयरथो वा। 'चन्द्रः स्वर्णेऽपि कथ्यते'। अमूरः अमूढ इति यास्कः। तथाहि तद्वचनम्–'मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग विन्त्से। मूढा वयं स्मोऽमूढस्त्वमसि न वयं विद्मो महत्त्वमग्ने त्वं तु वेत्थ' इति। वस्यः सहवासयोग्यः सोऽग्निः नः स्तुतिमुत शृणवत् अपिनाम

शृणुयात्? नेषतमैः नेतृतमैः एभिर्यज्ञकर्मभिः स्तुतिवचनैर्वा नोऽस्मान् वामं रमणीयं सुवितं सर्वैः सुकाङ्क्षितं पुण्यलोकमच्छ आभिमुख्येन सम्यग्वा उत नेषत् अपि नाम नयेत् ॥ ✻ ॥

अथ प्राणः । प्रकाशरूपः । जीराः जरणीया दिव्यत्वादश्वा यस्येति वा । जॄ स्तुताविति पठनीयमित्युक्तम् । जीरेषु देवेष्वपि अश्नुते व्याप्नोति वा । जीवन्तीति जीरेषु जीवेषु वा । जीवकलामानित्वात् । मन्दते इति मन्द्रः । मदि हर्षे । मन्द्यते स्तूयते वा । मदि स्तुतौ । मदं हर्षं रातीति वा । 'रयिरेव चन्द्रमाः' इति श्रुतेश्चन्द्र इति भारती । तस्यां रतः । चन्द्रस्थो वा । मुर वेष्टने । अमुर एवामूरः । अप्रतिहत-गतिः । न मव्यते न बध्यत इति वा । मू बन्धने । सदा सहैव जीवेन वासमर्हति वस्यः । सर्वाश्रयत्वाद्वा वसति सर्वमस्मिन्निति वस्यः । स नोऽस्मदीयं स्तवं अपिनाम शृणुयात् । अपिवा श्रावयेत् भगवते । नेतृतमैः अस्मद्भक्तिज्ञानादि-भिरपिनाम नयेद् भगवतः सन्निधिम्? वामं रमणीयं भगवन्तं वा ॥ ✻ ॥

अथ भगवान् । सुखरूपः द्यौः प्रकाशरूपश्चाऽत्मा देहोऽपि यस्य । द्यौर्ज्ञानरूपो वा । भारतिज्ञानरूपो भर्ग इत्येतत् । सुदिवः सुप्रकाशाः सुखज्ञानरूपा वा आत्मानो जीवा यस्मात् । यद्वा सुद्यूयते सद्भिरभिगम्यत इति तादृश आत्मा यस्य । 'द्यु अभिगमने' । द्यौरिव सम्यगातत इति वा । 'आकाशवत् सर्वगतश्च नित्यः' इति हि वदन्ति । दिवि त्रिविधे नित्यलोक आततो वा । 'त्रिपादस्यामृतं दिवि' इति श्रवणात् । जवत इति जीरः । 'शयानो याति सर्वतः' इति श्रवणात् । अश्नुते सर्वत्र व्याप्नोतीति अश्वः । जीर्यते स्तूयत इति जीरो वेदेड्यः । आशु वानाद्वते-रश्वो वा । इन्द्रियेषु विषयहोता । मन्दानपि रमयतीति मन्द्रः । 'चन्द्रां हिरण्मयीं लक्ष्मीम्' इति श्रवणाच्चन्द्रोऽक्षरः । तत्र रतः । तेन जीर्यन्त इति जीराः क्षरा वा । तानश्नुते व्याप्नोतीति समतीतक्षराक्षर उक्तो भवति ।

मव्यन्त इति मवो बद्धाः । अमवो मुक्ताः । मू बन्धने । तानपि रमयति । अनेन मुक्तामुक्तनियामकत्वमुक्तम् । स नः स्तवमुत शृणुयात् । सु सुखरूपतया इत-



मवगतम्, सुवीतं मुक्तप्राप्यम्, वी गत्यादौ, सूते ज्ञानान्दादिमिति वा, सुवि-ततं वा, वामं रमणीयं स्वलोकमपिनाम नयेदित्यादि ॥ १२ ॥

**(सं.भा.)** सुद्योत्मा सुद्योतमानः । जीवन्ति रमन्ते चेति सात्विका जीवा जीराः । तानश्नुते व्याप्नोति । देवा वा जीराः । रममाणा जीवा इति । जीरा वेगवन्तोऽश्वा अस्येति च । इन्द्रियेषु विषयहोता । हविषामत्ता दाता चाभीष्ट-फलस्य । हु दानादनयोः । मन्द्रः सुखकरः । आह्लादकस्य भगवतः रथइव । चन्द्र इव भारती । तस्यां रतो वा । अमूरः अप्रतिहतगतिः । मुर वेष्टने । अमुर एवामूरः । अमूढ इति यास्कः । सदा जीवेन सह वासमर्हतीति वस्यः । स प्राणाग्निः नः अस्मान् उत शृणवत् अपिनाम शृणुयात्? नेषतमैर-स्मदीयैर्भक्तिज्ञानादिभिरुत नेषत् अपिनाम नयेत् वामं कल्याणतमं सुष्ठु विततं भगवन्तम् । अच्छ अभिमुखम्, सम्यग् वा ॥ १२ ॥

**अस्ता॑व्य॒ग्निश्शिमी॑वद्भि॒र॒र्कैस्साम्रा॑ज्यायप्र॒तरन्द॒धा॑नः ।**
**अ॒मीच॒येम॒घवा॑नोव॒यश्च॒मिह॒न्नसू॒रो॒ऽअति॒निष्टं॑तन्युः ॥ १३ ॥**

**अस्ता॑वि । अ॒ग्निः । शिमी॑वत्+भिः । अ॒र्कैः । साम्+रा॑ज्याय । प्र॒+त॒रम् । द॒धा॑नः ॥ अ॒मीइति॑ । च॒ । ये । म॒घ+वा॑नः । व॒यम् । च॒ । मि॒ह॑म् । न । सू॒रः॑ । अति॑ । निः । त॒त॒न्यु॒ः ॥ १३ ॥ २ ॥**

**॥ इति द्वितीयो वर्ग्गः ॥**

**समाप्तं प्राणाग्निसूक्तम्**

प्रथमपादे 'अस्तावि अग्निः' इति, द्वितीये च 'साम्राजियाय' इति विश्लेषेण प्रतिपादमेकादशाक्षरम् ।

अस्माभिरग्निरस्तावि । 'शिमी शक्तिः' इति कर्मनामसु पठ्यते । कर्मसहितैः एतैः अर्चनसाधनैर्मन्त्रैः । अस्तावि कुतः? सम्यग् राजमानत्वाय । कीदृशोऽग्निः? प्रकृ-ष्टतरमुत्तमं स्वर्गादिफलं दधानो ददानः । धाञ् दानेऽपि पठ्यते ।

मखवन्तो मघवानः। 'तं वा एतं मखवन्तं सन्तं मघवानित्याचक्षते' इति श्रवणात्। यशस्विनो वा। 'यशो वाव मघम्' इति श्रवणात्। धनवन्तो वा। 'धनं वाव मघम्' इति श्रवणात्। यज्ञार्थं धनं विनियुज्य कीर्तिशालिनोऽमी यजमाना अपि तं स्तोत्रैः निश्चयेन ततन्युः तेनुर्विस्तारयामासुः। वयं च तेनिमेति। अमी चातिशयेन तनुयुर्वयं च तनुयामेति वा। कथम्? सूरः सूर्यो मिहं न वृष्टिमिव। यथेह मेघवर्षणेनाधिभूतसमृद्धिस्तथा स्तुतिवर्षणेनाध्यात्मसमृद्धिः सम्भूयादिति॥ ✲॥

अथ प्राणः। पूर्ववत् सर्वं योज्यम्। शम एव शिमी विष्णुनिष्ठा। तद्युक्तैर्मन्त्रैर्वा। प्राणाग्निमन्त्रानन्ततः विष्णुपरानेव मत्वा विष्णुभक्त्यैव भक्ताग्रण्यं प्राणमस्ताविष्मेति। मोक्षसाम्राज्याय च। प्रकृष्टतरं ज्ञानानन्दादिकं स्वयं दधानोऽस्मभ्यं च ददानः। शिमीवद्भिः शक्तिसम्पन्नैरर्कैरर्चनीयैरवताररूपैः सह मूलरूपी प्राणोऽस्तावीति वा। सर्वार्चनीयैर्नारायणादिपञ्चरूपैः सह पञ्चात्मा प्राणोऽस्तावीति वा। अन्यत् समानम्॥ ✲॥

अथ नारायणः। विष्णुनिष्ठायुक्तैः समर्थैर्वा वायुरूपैः सहाग्निनारायणः स्तुतः। समर्थैर्वासुदेवादिचतूरूपैः सहाग्निनारायणः स्तुत इति वा। रामकृष्णाद्यवताररूपैः सहेति वा॥ १३॥ २॥

**स्वराननुगुणं कचित्कचिदिहार्थनिर्वर्णनं**
**गुणानुगुणमेव तद् भगवतोऽपि वायोरपि।**
**यतो बहुलतावचः किमपि तन्न शङ्कापदं**
**गुरोः करुणयोदितं रुचितमेव सर्वं सताम्॥ ✲॥**

**इदमाचार्यगोविन्दः प्रमृष्टं शब्दतोऽर्थतः।**
**वितेने विमलं भाष्यं सूक्ते प्राणाग्निदैवते॥ ✲॥**

**इत्याचार्यगोविन्दस्य कृतिषु प्राणाग्निसूक्तभाष्यं समाप्तम्॥**

—०—



**(सं.भा.)**शिमीवद्भिः शिमी कर्मशक्तिः अर्चनाख्यकर्मयुक्तैः शक्तिशालिभिर्वा अर्कैः अर्चनसाधनैः मन्त्रैः प्राणाग्निरस्तावि। मोक्षसाम्राज्याय। प्रकृष्टतरं भगवन्तं प्रज्ञानं वा हृदि दधानः ददानश्च नः। वेदान्तसाम्राज्यस्य प्रकृष्टतरं स्थानं ददानो वा। ये मघवन्तः कर्मिणः तेऽमी च। अतिशयेन निश्चितं च तं ततन्युः तेनुर्विस्तारयामासुः। तनुयुर्वा। वयं च तेनिम तनुयाम वा। सूर्यः मिहं न वृष्टिमिव॥ १३॥ २॥

**इदमाचार्यगोविन्दः प्रमितं भाष्यसङ्ग्रहम्।**
**प्राणचिन्तनलोलत्वात् पुनश्चक्रे मिताक्षरम्॥ ✲॥**

**इत्याचार्यगोविन्दस्य कृतिषु प्राणाग्निसूक्तसङ्ग्रहभाष्यं समाप्तम्॥**

—०—

# श्रीमहाभारततात्पर्य्यनिर्ण्णयोद्धृताः सटीकाः प्राणमन्त्राः

**‘बळित्था’सूक्तस्य चत्वारो मन्त्राः**
**‘वेदिषदे’सूक्तस्य पञ्च मन्त्राः**
**षण्मन्त्रं ‘तांसुते’सूक्तं च**



ॐ

## चत्वारो ‘बळित्था’मन्त्राः

**ॐ॥ बळित्थातद्वपुंषेधायिदर्शतन्देवस्यभर्ग्गस्सहंसोयतोजनिं ।**
**यदीमुपह्वरंतेसाधंतेमतिरृतस्यधेनांऽअनयन्तसस्रुतंः ॥ १ ॥**

‘**बळित्था–**’[ऋ.सं.१.१४१.१–४] इत्यादिकं मन्त्रचतुष्टयं जागतं प्राणाग्नि-सूक्तगतम्, प्रथमं भृगुदृष्टम्, पश्चाद् दीर्घतमसा दृष्टम् । **बट् । इत्था । तत् । वपुषे । धायि । दर्शतम् । देवस्य । भर्ग्गः । सहसः । यतः । जनि । यत् । ईम् । उप । ह्वरते । साधते । मतिः । ऋतस्य । धेनाः । अनयन्त । स+स्रुतः** । इति प्रतृण्णम् । बट् बलरूपम् । दर्शतं ज्ञानरूपम्, ततं च तत् । पश्यतीति वा दर्शतं सर्वज्ञम् । दृशेरतच्प्रत्यय इति वैयाकरणाः [स.कं.२.२.१३५] । किं तत्? वायुरूपम् । बलत्वाद् वम् । अयनत्वात् ज्ञानरूपत्वादायुरिति वायुः । अय गतौ । इत्था इत्थमेव, मूलरूपं यथा तथा बलज्ञानात्मकमेव वपुषे अवताररूपायापि धायि अधायि । कीदृशं पुनस्तत्? यतो देवात् स्वयं जनि अजनि तस्य स्वपितुः सहसः अनभिभाव्यमहसो नारायणस्य देवस्य भर्गः भर्तृ च गन्तृ च । गमयितृ वा । यत् ईं यदेव च वपुः देवस्य उपह्वरते समीपे रहश्चरति, साधयति च नियुक्तं कार्यम् । तद्रूपं मतिर्नाम । दशप्रमतिमेव मतिमाहुः । ज्ञानस्वरूपत्वात् । ‘इत्था दर्शतम्’ इति ह्युक्तम् । कार्यक्षमतामेवाऽह – ऋतस्य रामस्य देवस्य रस-स्रुतः धेनाः सन्देशवचनानि तमेनं मतिं हनुमन्तं लङ्कां प्रत्यनयन्त । हन गतौ । तेन हनुमानिति गतिमानुच्यते ॥ १ ॥

**पृक्षोवपुःपितुमान्नित्यऽआशयेद्वितीयमासप्तशिवासुमातृषु ।
तृतीयमस्यवृषभस्यदोहसेदशप्रमतिञ्जनयन्तयोषणः ॥ २ ॥**

**पृक्षः । वपुः । पितु+मान् । नित्यः । आ । शये । द्वितीयम् । आ । सप्त+ शिवासु । मातृषु । तृतीयम् । अस्य । वृषभस्य । दोहसे । दश+प्रमतिम् । जनयन्त । योषणः ।** पृतनाक्षयकारी । आद्याक्षराभ्यां पृक्षः । पितुमान् । पितुरन्नम् । शकटान्नभुक् । भीमः इति यद् द्वितीयं वपुः तत् आ सप्तशिवासु सप्तसङ्ख्याकासु आ समन्तात् शिवासु शोभनासु विद्यासु, आ शये सम्यक् शेते, अनायासेन विहरति । यच्चास्य देववृषभस्य तृतीयं वपुः, तं दशप्रमतिं पूर्णप्रज्ञं दोहसे यथार्थज्ञानदोहाय वेदमानिन्यः योषणः तन्मातरमनुविश्य जनयन्त अजनयन्त ॥ २ ॥

**निर्य्यदीम्बुध्नान्महिषस्यवर्प्पसऽईशानासश्शवसाक्रन्तसूरयः ।
यदीमनुप्रदिवोमध्वऽआधवेगुहासन्तम्मातरिश्वामथायति ॥ ३ ॥**

**निः । यत् । ईम् । बुध्नात् । महिषस्य । वर्प्पसः । ईशानासः । शवसा । क्रन्त । सूरयः । यत् । ईम् । अनु । प्र+दिवः । मध्वः । आ+धवे । गुहा । सन्तम् । मातरिश्वा । मथायति ।** यदीं यस्मादेव बुध्नात् बुधानां नेतुर्वायो-स्तृतीयरूपात् महितषड्गुणस्य नारायणस्य वर्पसो गुणान् ईशानाद्याः समर्था वा सूरयः शवसा सुखेनैव निः क्रन्त निरक्रन्त निश्चितवन्तः । यदीं यदेव च रूपं प्रदिवः प्रज्ञावतः सात्विकाननुकूलयितुं वेदेषु निगूढं सन्तं भग-वन्तं मथायति शास्त्राणि मथित्वामथित्वा प्रकाशयति । स किल मध्वो मातरिश्वा । किमर्थम्? आधवे आधवत्वाय । भगवतः सर्वेशत्वस्थिरी-करणाय । तेन चाऽधवनाय शास्त्रशुद्धीकरणाय ॥ ३ ॥

**प्रयत्पितुःपरमान्नीयतेपर्य्यापृक्षुधोवीरुधोदंसुरोहति ।
उभायदस्यजनुषंयदिन्वतऽआदिद्यविष्ठोऽअभवद्घृणाशुचिः ॥ ४ ॥**



**प्र । यत् । पितुः । परमात् । नीयते । परि । आ । पृक्षुधः । वीरुधः । दं+सु । रोहति । उभा । यत् । अस्य । जनुषम् । यत् । इन्वतः । आत् । इत् । यविष्ठः । अभवत् । घृणा । शुचिः ।** यत् इदं तृतीयं रूपं स्वपितुः परमपुरुषात् प्रणीयते तस्मात् पृक्षुधः दुर्वादिनां क्षुद्रप्रश्नान् उक्षा वीरुध इव दन्तेषु परित आरोपयति, चर्वश्चर्वं शकलीकरोतीत्येतत् । यद् यस्मात् यदिदमस्य जनुषं तृतीयं जननं उभा लक्ष्मीनारायणौ इन्वतः व्याप्नुतः, व्याप्य प्रेरयतश्च । आदित् तस्मादेव अवतारेषु यविष्ठोऽयं मध्वः साधुषु घृणावान्, घृणया वा परम-शुचिश्चाभवत् । समग्रसूक्तार्थस्त्वस्मत्कृतप्राणाग्निसूक्तभाष्ये द्रष्टव्यः ॥ ४ ॥

—०—

## 'वेदिषदे' सूक्तस्य पञ्चमन्त्राः

**'भूषन्–'** इति **'बळित्था–'** इति च सूक्तद्वयं प्राणाग्निदेवत्यं दीर्घतमस आर्षम् । **'तां सु ते–'** इति इन्द्रनाम्नः प्राणस्य सूक्तं बृहदुक्थदृष्टम् । तथाहि **'वेदिषदे प्रियधामाय'** [ऋ.सं.१.१४०] इति सूक्तं त्रयोदशर्चम् । तत्र त्रयो वर्गाः । प्रथममृक्पञ्चकं प्रथमो वर्गः । उत्तरपञ्चकं द्वितीयः । तत ऋक्त्रयं तृतीयः । **'भूषन् न योऽधि–'** इति द्वितीयवर्गस्य प्रथमो मन्त्रः [१.१४०. ६] । **'बळित्था–'** इति तत उत्तरं सूक्तम् [१४१] । तदपि त्रयोद-शर्चम् । व्याख्याय्यस्माभिरेषु केचन मन्त्राः श्रीमध्वविजयटीकायाम् । तत्र मध्वपरतया विवृतमत्र भीमपरतया किञ्चिद् विव्रियते । प्रथमसूक्ते द्वितीय-वर्गस्येदमर्थानुसन्धानं भवति ।

तत्रायं प्रथमो मन्त्रः–

**ॐ॥ भूषन्नयोधिबभ्रूषुनम्नतेवृषेवपत्नीरभ्यैतिरोरुवत् ।
ओजायमानस्तन्वश्चशुम्भतेभीमोनशृङ्गादविधावदुर्गृभिः ॥
॥ ६ ॥**

**भूषन् । न । यः । अधि । बभ्रूषु । नम्नते । वृषा+इव । पत्नीः । अभि । एति । रोरुवत् ॥ ओजायमानः । तन्वः । च । शुम्भते । भीमः । न । शृङ्गा । दविधाव । दुः+गृभिः ॥ ६ ॥**

भूषन्न भूषयन्निव आत्मानं भगवद्भक्त्यादिभिः । यो भीमः बभ्रूषु भगवद्रूपेषु अधिकं नम्नते नतो भवति । बिभर्ति भरति वा तेजः, सर्वं जगदिति वा बभ्रुर्विष्णुः । **'पिङ्गलो नकुलश्चैव खलतिर्विष्णुरेव च । चतुर्ष्वर्थेषु मेधाविन् बभ्रुशब्दः प्रयुज्यते'** इत्यभिदधति । **'रुद्रो बहुशिरा बभ्रुः'** इति विष्णसहस्र-नामसु । भार्गवः पाराशर्यो वासुदेव इति त्रीणि विष्णुरूपाणि विशिष्य भीमोपास्यानि । एवमन्तरङ्गे भगवत्प्रणतो भीमः व्यवहारदृष्ट्या वृषेव पत्नीः द्रौपदीकाळ्याद्या अभ्येति हर्षेण मुहुर्मुहुर्नदन् । अथच तमःपतनशीलाः शत्रुसेना अभ्येति सिंहनादं नदन् । न केवलं भीमः स्वयमोजायमानः परेषामभिभावकः सन् शुम्भते शोभते । **'शुभ शुम्भ शोभार्थौ'** । किन्तु युधिष्ठिरादीनां तनूश्च स्वसन्निधानेन वर्धितौजसः शोभयति । पराभिभवशक्तिरोजः । **'उब्जेर्बले बलोपश्च'**[९.५२] इति दशपादिका । उब्जेर्धातोरसुन् प्रत्ययो भवति बले गम्यमाने बलोपश्च । उब्ज आर्जवे । उब्जतीत्योजः । भीमो न भीमो मृगः सिंह इव । **'मृगं न भीमम्'** इति श्रुतेर्नरसिंह इव वा । भीम इवायं भीमः शत्रुभिर्दुर्गृभिः अनिग्राह्यः । शृङ्गाणि दुष्टराजन्यानां प्रभुत्वानि विधूनयामास । **'शृङ्गं प्रभुत्वे'** इत्य-भिधानम् ॥ ✲ ॥

द्वितीयो मन्त्रः–

**ससंस्तिरोविष्टिरस्सङ्गृभायतिजानन्नेवजानतीर्नित्यऽआशये ।**
**पुनर्वर्द्धन्तेऽअपियन्तिदेव्यमन्यद्वर्प्पःपित्रोःकृण्वतेसचा ॥ ७ ॥**

**सः । सम्+स्तिरः । विऽस्तिरः । सम् । गृभायति । जानन् । एव । जानतीः । नित्यः । आ । शये ॥ पुनः । वर्द्धन्ते । अपि । यन्ति । देव्यम् । अन्यत् । वर्प्पः । पित्रोः । कृण्वते । सचा ॥ ७ ॥**



स स्वयं संसारादुत्तीर्णः । अथापि जीवकलामानित्वाद् विस्तिरः जगति विस्तृतः सन् सं गृभायति भगवत्स्वरूपं ग्राहयति । भीमश्च धर्मजादिषु आत्मानं विस्तीर्य तान् सम्यग् ग्राहयति । स्वयं जानन्नेव पञ्चदेवीनां शापादि-कम्, ताः स्वस्वरूपं जानतीरेकदेहाः पञ्चदेवीरा शये । तास्वरमतेत्यर्थः । शच्याद्याः एकैकाः प्रतिपञ्चवर्षं पुनःपुनः सन्निधानवृद्धिं प्राप्नुवन्ति । देवनयोग्यं स्वस्वपतिं यन्ति । देव्यं स्तुत्यं वायुमपि यन्ति । पित्रोर्लक्ष्मीनारायणयोः अन्यद् विलक्षणं वर्पः गुणजातं भीमेन सचा सहाविष्कुर्वते ॥ ✲ ॥

तृतीयो मन्त्रः–

**तमग्रुवःकेशिनीस्संहिरेभिरऽऊर्ध्वास्तस्थुर्म्मम्रुषीःप्रायवेपुनः ।**
**तासाञ्जराम्प्रमुञ्चन्नेतिनानदद्दसुम्परञ्जनयञ्जीवमस्तृतम् ॥ ८ ॥**

**तम् । अग्रुवः । केशिनीः । सम् । हि । रेभिरे । ऊर्ध्वाः । तस्थुः । मम्रुषीः । प्र । आयवे । पुनरिति ॥ तासाम् । जराम् । प्र+मुञ्चन् । एति । नानदत् । असुम् । परम् । जनयन् । जीवम् । अस्तृतम् ॥ ८ ॥**

स्त्रीणामग्रुवः अग्रगाः केशिन्यः सुन्दरकेशवत्यः देव्यः । केशी वायुस्तद्भार्या वा । तं सं हि रेभि रे परिरेभिरे । तच्छत्रूणां भार्याः पुनर्मम्रुषीः मृतिमिच्छन्त्यः आयवे युद्धार्थमागच्छते भीमाय, तं निवारयितुं ऊर्ध्वमुखाः प्रतस्थुः । तासां जरां जरणं निन्दावचनं प्रमुञ्चन् तिरस्कुर्वन् एति सिंहनादं नदन् । परं परकीयं शात्रवं असुं प्राणशक्तिं जीवं तद्धारणशक्तिं च अस्तृतमविस्तृतमदीर्घमल्पकालीनं कुर्वन् ॥ ✲ ॥

चतुर्थो मन्त्रः–

**अधीवासम्परिमातूरिहन्नहतुविग्रेभिस्सत्वभिर्य्यातिविज्रयः ।**
**वयोदधत्पद्वतेरेरिहत्सदानुश्येनीसचतेवर्त्तनीरह ॥ ९ ॥**

**अधीवासम् । परि । मातुः । रिहन् । अह । तुवि+ग्रेभिः । सत्व+भिः । याति । वि । ज्रयः ॥ वयः । दधत् । पत्ऽवते । रेरिहत् । सदा । अनु । श्येनी । सचते । वर्त्तनिः । अह ॥ ९ ॥**

मातुर्वेदविद्याया अधिवासं नृसिंहात्मानं भगवन्तं रिहन् स्वदमानः मनसा स्मरन् तुविग्रेभिः वेगेन शत्रून् ग्रसद्भिर्धावद्भिः सत्वभिः प्राणिभिः गजैः सह योद्धुं वियाति व्रयः अभिभवन् शत्रून् । व्रयतीति व्रयः । व्रि अभिभवे । अयमेव पद्वते प्राणिमात्राय वय आयुर्दधाति । अन्ते च रेहिहत् संहरन् । रिह हिंसायाम् । श्नेनो गरुडोऽस्य वाहनमिति श्येनी नारायणः कृष्णः । स सदा एनं भीममनुवर्तनिः सन् सचते सङ्गतो भवति । अहेत्यास्वादे । 'वर्तनिः । अह' इति प्रतृण्णम् । संहितायामतिशयार्थो दीर्घः । भीमस्य कुञ्जरकदनकौशलं कृष्णानुग्रहं च विपुलं स्वादयितुं द्विरहेत्याह ॥ ❋ ॥

पञ्चमो मन्त्रः–

**अस्माकमग्नेमघवत्सुदीदिह्यधश्वसीवान्वृषभोदमूनाः ।**
**अवास्याशिशुमतीरदीदेर्वर्म्मेवयुत्सुपरिजर्भुराणः ॥ १० ॥**

**अस्माकम् । अग्ने । मघवत्+सु । दीदिहि । अध । श्वसीवान् । वृषभः । दमूनाः ॥ अव+अस्य । शिशु+मतीः । अदीदेः । वर्म्म+इव । युत्+सु । परिऽ+जर्भुराणः ॥ १० ॥**

अत्रापि 'अवास्य' इति प्रतृण्णम् । अग्ने शत्रुतापक, अस्माकं मघवत्सु ज्ञानधनवत्सु विद्वत्सु दीदिहि दीप्यस्व । तत्र दीप्तोऽस्माकं ज्ञानं प्रकाशय । श्वसीवान् अस्मान् प्राणयन्, युद्धेषु स्वपक्षीयान् प्राणयन्, वीरवृषभः शत्रुदमनाद् दमूनाः । 'दमेरूनसिः' [९.९५] इति दशपादिका । दाम्यति दमयति वा दमूनाः । शिशुर्बालः, अथापि श्यति तनूकरोति शत्रूनिति शिशुरभिमन्युः । 'शः कित् सन्वच्च' [१.१०५] इति दशपादिका । शोधातोरुः प्रत्ययः । सन्वच्च कार्यमिति । तं परित आवृत्य स्थिताः शिशुमतीः कौरवसेनाः अवास्य अपहाय पद्मव्यूहाद् बहिरेव अदीदेः दीप्तोऽभवः । अथापि युत्सु युद्धेषु स्वानां वर्मेव रक्षाकवचमिव परिजर्भुराणः शत्रुबाधां परितः परिहरन् सञ्चरसि ॥ ❋ ॥



## 'तांसुते'सूक्तम्

'तां सु ते कीर्तिम्–' इति दशममण्डले [१०.५४] षळृचं सूक्तं बृहदुक्थस्यार्षं त्रैष्टुभमिन्द्रदेवत्यम् । इन्द्र इति सर्वजीवेश्वरः प्राणः ।

तत्र प्रथमो मन्त्रः–

**ॐ॥ तांसुतेकीर्त्तिम्मघवन्महित्वायत्त्वाभीतेरोदसीऽअह्वयेताम् ।**
**प्रावोदेवाँआतिरोदासमोजःप्रजायैत्वस्यैयदशिक्षऽइन्द्र ॥ १ ॥**

**ताम् । सु । ते । कीर्त्तिम् । मघऽवन् । महि+त्वा । यत् । त्वा । भीतेइति । रोदसीइति । अह्वयेताम् ॥ प्र । आवः । देवान् । आ । अतिरः । दासम् । ओजः । प्र+जायै । त्वस्यै । यत् । अशिक्षः । इन्द्र ॥ १ ॥**

हे मघवन्, युद्धाख्याध्वरवन्, इन्द्र, शत्रुदमनसमर्थ भीम, तां कौरवपृतनाक्षपणरूपां ते कीर्तिं तानि च ते महित्वानि महिमविशेषान् सु सम्यक् स्तौमीति शेषः । रोदसी द्यावापृथिव्यौ, द्युस्थं देववृन्दं भुवि च सज्जनवृंदं युद्धाद् भीते त्वां यत् यस्माद् अह्वयेतां आहूय रक्षेति प्रार्थयेतां तस्माद् देवान् तत्पक्षीयांश्च प्रावः अरक्षः । दासं लोकोपक्षयकारिणं दस्युजनमतिरः व्यनाशयः । तेन त्वस्यै कस्यैचन प्रजायै धर्मराजाय, सात्विकजनाय वा, ओजः पराभिभवशक्तिमशिक्षः अशिक्षयः, प्रायच्छ इत्येतत् । तत् तां ते कीर्तिं सुष्ठु स्तौमि । 'सु' इति प्रकृतिमात्रनिर्देशो वा । तादृशीं कीर्तिं सु सुषुविथ, जनयामासिथेत्यर्थः ॥ ❋ ॥

द्वितीयो मन्त्रः–

**यदचरस्तन्वावावृधानोबलानीन्द्रप्रब्रुवाणोजनेषु ।**
**मायेत्साते यानियुद्धान्याहुर्नाद्यशत्रुंननुपुराविवित्से ॥ २ ॥**

यत् । अचरः । तन्वा । वावृधानः । बलानि । इन्द्र । प्र+ब्रुवाणः । जनेषु ॥
माया । इत् । सा । ते । यानि । युद्धानि । आहुः । न । अद्य । शत्रुम् । ननु ।
पुरा । विवित्से ॥ २ ॥

वावृधानः नित्यवृद्धबलः मानुषतन्वा भीमरूपेण यदचरः रणाजिरे, **'अन्धस्य नृपतेः पुत्रा मया परिघबाहुना । नीता लोकममुं सर्वे नानाशस्त्रास्त्रयोधिनः । इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ । ययोरन्तरमासाद्य धार्तराष्ट्राः क्षयं गताः । ताविमौ चन्दनेनाक्तौ चन्दनार्हौ च मे भुजौ । याभ्यां दुर्योधनो यातः क्षयं ससुतबान्धवः'** इत्यादिना ते बलानि स्वजनेषु धृतराष्ट्रादिषु शृण्वत्सु प्रब्रुवाणः । सा ते मायेत् । मोहजननी प्रवृत्तिः । रोषेण भीमो युयुधे, द्वेषेण भीमो जगादेति । वस्तुतस्तु भगवत्पूजेत्ययुध्यथाः । धृतराष्ट्रे वैराग्य-जननाय कृपयाऽब्रूथाः । यानि च ते युद्धान्याहुः जरासन्धादिभिः साऽपि ते मायेत् । केवललीला । यतः नाद्य शत्रुं विवित्से लभसे, न पुराऽलभथा इति ॥ ※ ॥

तृतीयो मन्त्रः–

**कऽउनुतेमहिमनस्समस्यास्मत्पूर्वऽऋषयोन्तमापुः ।**
**यन्मातरञ्चपितरञ्चसाकमजनयथास्तन्वःस्वायाः ॥ ३ ॥**

के । ऊँइति । नु । ते । महिमनः । समस्य । अस्मत् । पूर्वे । ऋषयः ।
अन्तम् । आपुः ॥ यत् । मातरम् । च । पितरम् । च । साकम् । अजन-
यथाः । तन्वः । स्वायाः ॥ ३ ॥

अस्मत्पूर्वेऽपि ऋषयः के नु ते समस्तस्य महिम्नोऽन्तमापुः । यत् मातरं पितरं च द्यावापृथिव्यौ, तद्गतान् देवांश्च मनुष्यांश्च स्वमूलरूपादेवाजन-यथाः ॥ ※ ॥

चतुर्थो मन्त्रः–

**चत्वारितेऽअसुर्य्याणिनामादाभ्यानिमहिषस्यसन्ति ।**
**त्वमङ्गतानिविश्वानिवित्सेयेभिःकर्म्माणिमघवञ्चकर्थ ॥ ४ ॥**



चत्वारि । ते । असुर्य्याणि । नाम । अदाभ्यानि । महिषस्य । सन्ति ॥
त्वम् । अङ्ग । तानि । विश्वानि । वित्से । येभिः । कर्म्माणि । मघऽवन् ।
चकर्थ ॥ ४ ॥

असुरान् अभियान्तीति असुर्याणि असुरैरदाभ्यानि अहिंस्यानि यानि चत्वारि नाम नामानि रूपाणि वा युधिष्ठिरोऽर्जुनो नकुलः सहदेव इति । तानि महनीयस्य तवैव । तेषु त्वमेव सन्निहितस्तत्तन्नामेत्यर्थः । त्वमेव तान् सर्वान् वेत्सि । येभिरुपकरणभूतैस्त्वमेव सर्वाणि कर्माणि चकर्थ ॥ ※ ॥

पञ्चमो मन्त्रः–

**त्वंविश्वादधिषेकेवलानियान्याविर्य्याचगुहावसूनि ।**
**काममिन्मेमघवन्माविताारीस्त्वमाज्ञातात्वमिन्द्रासिदाता ॥ ५ ॥**

त्वम् । विश्वा । दधिषे । केवलानि । यानि । आविः । या । च । गुहा ।
वसूनि ॥ कामम् । इत् । मे । मघऽवन् । मा । वि । तारीः । त्वम् ।
आ+ज्ञाता । त्वम् । इन्द्र । असि । दाता ॥ ५ ॥

त्वं विश्वानि वसूनि दधिषे धत्से । ज्ञानानि वित्तानि च । केवलानि केवलं भगवत्पूजार्थानि । यान्याविः प्रकटानि यानि च गुहा गुह्यानि । मे कामितं मा विनाशीः । त्वमेव सर्वस्य ज्ञाता दाता च ॥ ※ ॥

षष्ठो मन्त्रः–

**योऽअदधाज्ज्योतिषिज्योतिरन्तर्य्योऽअसृजन्मधुनासम्मधूनि ।**
**अधप्रियंशूषमिन्द्रायमन्मब्रह्मकृतोबृहदुक्थादवाचि ॥ ६ ॥**

यः । अदधात् । ज्योतिषि । ज्योतिः । अन्तः । यः । असृजत् । मधुना ।
सम् । मधूनि ॥ अध । प्रियम् । शूषम् । इन्द्राय । मन्म । ब्रह्म+कृतः ।
बृहत्+उक्थात् । अवाचि ॥ ६ ॥

यः प्राणः सूर्यादिज्योतिषि अन्तर्ज्योतिरदधात् । सूर्यादिषु स्थित्वा तेषां भासकः स एवायं भीमः । यश्च मधुराणि मधुरेण रसेन समयोजयत् । अथ तस्मादिदं स्तोत्रमिन्द्राय मन्त्रकृतः बृहदुक्थादृषेरवाचि । कीदृशं स्तोत्रम्? प्रियं प्राणस्य भीमस्य च । शूषं बलकरं स्तोतॄणाम् । मन्म मननीयं सर्वेषां सतामिति ॥ ✲ ॥







# श्रीमध्वविजयटीकोद्धृताः
# सटीकाः प्राणमन्त्राः

**'वेदिषदे' सूक्तस्याष्टौ मन्त्राः**
**'बळित्था' सूक्तस्य पञ्च मन्त्राः**
**षण्मन्त्रं 'तांसुते' सूक्तम्**
**विष्णुसूक्ते पञ्चमो मन्त्रः**
**त्रितदृष्टे प्राणाग्निसूक्ते पञ्चमो मन्त्रः**



ॐ

## 'वेदिषदे' सूक्तस्याष्टौ मन्त्राः

**भूषन्न योऽधि बभ्रूषु नम्नते** । त्रयोदशर्चमिदं सूक्तम् –**'वेदिषदे प्रियधामाय सुद्युते–'** [ऋ.१.१४०.१] इत्यादि । दीर्घतमा औचथ्य ऋषिः । प्राणाग्नि-र्देवता । एकादश जगत्यः । दशमी त्रिष्टुब् वा । अन्त्ये त्रिष्टुभौ । तथाह्य-नुक्रमणिका– 'वेदिषदे सप्तोना, दीर्घतमा औचथ्यः, आग्नेयं तु, द्वित्रिष्टुबन्तं तु, त्रिष्टुब् दशमी वा' इति । तत्र आद्याः पञ्चर्चः प्रथमो वर्गः । ततः पञ्च द्वितीयः । अन्त्यास्तिस्रस्तृतीयः । द्वितीयवर्गस्याऽद्यो मन्त्रः **'भूषन् न योऽधि–'** इत्यादि । विशिष्य मध्वावतारकथा तत्र वर्ण्यत इति तत एव प्रतीकमग्राहि भावप्रकाशिकाकृता । तस्येयं व्याख्या भवति ।

तत्र सूक्ते षष्ठो द्वितीयवर्गे प्रथमो मन्त्रः–

**ॐ॥ भूषन्नयोधिबभ्रूषुनम्नंतेवृषेवपत्नीरभ्यैतिरोरुवत् ।**
**ओजायमानस्तन्वश्चशुम्भतेभीमोनशृङ्गादविधावदुर्गृभिः ॥**
**॥ ६ ॥**

व्याख्यानेन भूषयन्निव, भगवद्गुणान् बिभ्रतीति बभ्रूषु केवलं विष्णुपरासु विद्यासु अधिकं नतो भवति । अमुख्यवृत्त्याऽन्यत्रापि पतनशीलाः विद्याः वृषेव रोरुवदभ्येति । अन्याश्च तन्वस्तदर्थोपबृंहणेन विस्तारयित्रीर्विद्याः, अल्पा अङ्गविद्या वा यथार्थाविष्करणेनोद्दीपयति । शतशृङ्गशृङ्गाणि, प्रत्यर्थिशृङ्गाणि वा, भीमसेन इव मध्वोऽपि दुर्वादिभीमः शुष्कतर्कैर्दुर्गृभिर्दुर्ग्राह्यः कुभाष्यशृङ्गाणि दुर्वादिशृङ्गाणि चायं विधूनयामास विकम्पयामास । धू विधूनने ॥ * ॥

द्वितीयो मन्त्रः–

**ससंस्तिरोविष्टिरस्सङ्गृभायतिजानन्नेवजानतीर्न्नित्यऽआशये ।**
**पुनर्वर्द्धन्तेऽअपियन्तिदेव्यमन्यद्वर्प्पःपित्रोःकृण्वते सचा ॥ ७ ॥**

स मध्वः क्वचित् संस्तिरः सङ्क्षिप्तः, क्वचिद् विष्टिरः विस्तृतः । सङ्क्षेप-विस्तराभ्यामिति यावत् । वेदार्थं सङ्गृह्णाति । स्वयं सर्वं जानन्नेव भगवद्गुणान् गातुं जानतीर्वेदविद्या नित्यमा शेते । तासु विहरति । 'नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु' इति वक्ष्यति । अपव्याख्यानेन पिहितास्ताः पुनरस्य व्याख्यानेन वर्धन्ते । देव्यं स्तुत्यं भगवन्तं स्तोतुं यन्ति च । ततश्च जगत्पित्रोः लक्ष्मीनारायणयोः प्राणनारायणयोर्वा सचा सहैवान्यदपूर्वं वर्पः गुणविशेषमाविष्कुर्वते ॥ * ॥

तृतीयो मन्त्रः–

**तमग्रुवःकेशिनीस्संहिरेभिरऽऊर्ध्वास्तस्थुर्म्मम्रुषीःप्रायवेपुनः ।**
**तासाञ्जराम्प्रमुञ्चन्नेतिनानदद्दसुम्परञ्जनयञ्जीवमस्तृतम् ॥ ८ ॥**

अग्रुवः प्रतीक्षयाऽग्रतः स्थिताः केशिन्यः कामिन्य इव वेदविद्यास्तमवतीर्णं संहि रेभिरे परिरेभिरे स्वार्थाविष्करणाय । ताः खल्वपि केशिन्यः । के शेत इति केशो नारायणः । तद्वत्यः । भगवत्परतानिराकरणेन ता अकेशिन्य इवाऽसन् । इदानीं मध्वेन सुकेशिन्योऽभूवन्निति । मम्रुषीः मृतप्राया अपव्याख्या-नेन पुनः प्रायवे उज्जीवयितुमागच्छते वायवे स्वागतं व्याहर्तुमुत्कण्ठया ऊर्ध्वास्तस्थुः । तासां जीर्णतां प्रमोचयन्नेष नारायणगुणान् नानददेति । तासां परमसुं प्राणं जनयन्, उज्जीवयन्, अस्तृतमविच्छिन्नं जीवं जीवनशक्तिं च जनयन् ॥ * ॥

चतुर्थो मन्त्रः–

**अधीवासम्परिमातूरिहन्नहतुविग्रेभिस्सत्वभिर्य्यातिविज्रयः ।**
**वयोदधत्पद्वतेरेरिहत्सदानुश्येनीसचतेवर्त्तनीरह ॥ ९ ॥**



मातुरधिवासं वेदावासं वेदव्यासं परि लिहन् मनसा स्वदमानः, ध्यायन् । अहेति स्वयमास्वदते । तुविग्रेभिः प्रभूतगमनशीलैः धावद्भिः सत्वभिर्जन्तुभिः सह ज्रयः, 'ज्रि अभिभवे', वेगेन धावन्ति सत्वान्यप्यभिभवन्, वि याति व्यासा-श्रमम् । अथ खल्वपि– वेदमातुरधीवासं भगवन्तं परि रिहन् स्वयमास्वदमानो गायन्, तुविग्रेभिः उच्चैर्भगवन्तं गायद्भिः बहुग्रहणशीलैर्वा सत्वभिः सात्विकैरनुगैः ज्रयः भगवद्गुणप्रसारणे कृतरयः भुवं वि याति सञ्चरति । जराजीर्णाया वेदविद्याया नवं वयो दधत् ददत् । पद्वते मर्त्यलोकाय तदनुग्रहाय भगवद्गुणान् रेरिहदास्वादयन् श्येनी, 'श्यैङ् गतौ', सञ्चरन् । वर्तनीरहेत्यत्र वर्तनिरिति प्रतृण्णम् । सदा अनुवर्तनिः भगवत्सङ्कल्पमनुवर्तमानः सदा अनु सचते भगवन्तमनुगतो भवति । अहेति पुनरास्वादे ॥ * ॥

पञ्चमो मन्त्रः–

**अस्माकमग्नेमघवत्सुदीदिह्यधश्वसीवान्वृषभोदमूनाः ।**
**अवास्याशिशुमतीरदीदेर्वर्म्मेवयुत्सुपरिजर्भुराणः ॥ १० ॥**

हे अग्ने विद्वदग्रणीः, तत्ववादाग्रनेतः, अस्माकं मघवत्सु तत्ववादाख्य-सम्पद्धरितेषु गृहेषु दीदिहि दीप्यस्व । अथ चास्मान् साधुमार्गे श्वसीवान् चेष्टयन् देववृषभः अशुभान् दमूना दमयन् भव । 'अवास्या' इति क्षैप्रदीर्घलोपे 'अवास्य' इति प्रतृण्णम् । शिशुमतीः प्रजनने रताः, नतु प्रज्ञाजनने, प्रजा अवास्य निरस्य अदीदेः अतितरां द्योतमानो भव । युत्सु ज्ञानयुद्धेषु तत्व-वादेषु जल्पवितण्डासु च वर्मेव परिजर्भुराणः परितः शत्रून् परिहरन् रक्षिता भव ॥ * ॥

अथ तृतीयवर्गे प्रथमो मन्त्रः–

**इदमग्नेसुधितन्दुर्धितादधिप्रियादुचिन्मन्मनःप्रेयोऽअस्तुते ।**
**यत्तेशुक्रन्तन्वोरोचतेशुचितेनास्मभ्यंवनसेरत्नमात्वम् ॥ ११ ॥**

हे अग्ने सर्वदेवाग्र्य, दुर्धितात्, धि धारणे, दुष्टं धृताद् वेदार्थापनयनादधि उपरि इदं ते यथावद् व्याख्यानं सुधितं सम्यगवधृतम्। मन्मनः मननीयात् प्रियादु चित् सर्वस्मादपि प्रियवस्तुनस्तवेदं व्याख्यानं नः प्रेयोऽस्तु । यत् ते तन्वः शुचि शुक्रं तेजो रोचते तेन त्वमस्मभ्यं रत्नमानन्दमा वनसे वितरसि ॥ * ॥

द्वितीयो मन्त्रः–

**रथायनावमुतनोगृहायनित्यारित्राम्पद्वतीरास्यग्ने ।**
**अस्माकंवीराँउतनोमघोनोजनांश्चयापारयाच्छर्म्मयाच ॥ १२ ॥**

हे अग्ने अज्ञानात्तः, रथायाऽनन्दरूपाय गृहाय सर्वाश्रयणीयाय गृह्यमाणाय वा भगवते, तं प्राप्तुमिति यावत्। नस्तत्वविद्याख्यां नावमुत रासि ददासि । नित्यं भक्त्याख्यारित्रयुक्ताम्। अरित्रं जलापकर्षणदण्डः । पद्वतीं पदनवतीम्। भगवदभिमुखं गमनशीलाम् । या नौर्न केवलमस्मान्, किन्त्वस्माकं वीरानुत, वीरशब्दः सन्ततिवचनः । पुत्रपौत्रादिकानपि मघोनः ज्ञानभक्त्यादिसम्पन्नान् कृत्वा संसारात् पारयात् तारयेत्। **'नास्याब्रह्मवित् कुले भवति'** इति हि श्रुतिः। उत नो जनांश्च सहचारिणः सात्त्विकान् तारयेत्। या च तारयित्वा शर्म स्वरूपानन्दं प्रयच्छेत् ॥ * ॥

तृतीयो मन्त्रः–

**अभीनोऽअग्नऽउक्थमिज्जुगुर्य्याद्यावाक्षामासिन्धवश्चस्वगूर्त्ताः ।**
**गव्यंयव्यंयन्तोदीर्घाहेषंवरमरुण्योवरन्त ॥ १३ ॥**

हे अग्ने अज्ञागनेतः, न उक्थमेतत् स्तुतिवचनं अभिजुगुर्या अभिगृणीहि । स्वीकृत्य समुल्लाघय । त्वदनुग्रहेण द्यावाक्षामा द्यावापृथिव्यौ, स्वगूर्ताः, गूरी उद्यमने, स्वत एव गमनोद्यताः सन्ततप्रवहणशीलाः सिन्धवो नद्यश्च । तदभिमानिन्य इत्येतत्। गव्यं गवि वाचि स्थितं वेदवेद्यम्, यव्यम्, 'यु मिश्रणे', ध्याने मनसा संयोजनीयम्, परं ब्रह्म यन्तः यन्त्यः प्रापयन्त्यः, सामर्थ्यातिशयद्योतनाय पुंवत्प्रयोगः, भवन्तु। अरुण्य उषसः दीर्घाणि निरन्तराणि अहानि



च। दीर्घाण्यहानि निरन्तरमिति वा। अत्यन्तसंयोगे द्वितीया। इषमिष्टं वरं वरणीयं सर्वं वरन्त वरयन्तु निनयन्तु । इषं ज्ञानाख्यमन्नं वा । 'अन्नं ज्ञानरसान्नं च बाह्यमन्नमिति द्विधा' इति हि स्मरन्ति ॥ * ॥

—०—

## पञ्च 'बळित्था' मन्त्राः

इत उपरि **'बळित्था–'**[ऋ.१.१४१] इत्यादि दैर्घतमसमेव सूक्तं भवति त्रयोदशर्चं प्राणाग्निदेवत्यम् । एकादश जगत्यः। अन्त्ये त्रिष्टुभौ। आद्याः पञ्च मन्त्राः प्रथमो वर्गः। तत्रैव विशिष्यावताराणां प्रस्तावात् तावानेव व्याख्यायते। व्याख्यातं च समग्रं सूक्तमस्माभिः पूर्वमेव विस्तरेणेत्यधिकं तत्रैव द्रष्टव्यम् ।

तत्र प्रथमो मन्त्रः–

**ॐ॥ बळित्थातद्वपुषेधायिदर्शतन्देवस्यभर्ग्गस्सहसोयतोजनि ।**
**यदीमुपह्वरतेसाधतेमतिरृतस्यधेनाऽअनयन्तसस्रुतः ॥ १ ॥**

सहसः अनभिभाव्यस्य देवस्य भर्गः तेजः यतो वायोर्जनि वेदार्थमथनेनाभिव्यक्तमजनि तत् प्राणतत्वं बट् बलरूपम्, इत्था इत्थमेव मूलरूपवदेव बलात्मकं दर्शतं सर्वज्ञं च त्रेधा वपुषेऽवताराय धायि अवधृतम्। यदीं यदेव उप ह्वरते श्रीराममुपह्वरे सेवते, साधते साधयति च तदादिष्टं स मतिर्नाम । हनुमन्नामकं प्रथमं रूपम्। मतिमान् हनुमानिति च समानोऽर्थः। 'हन ज्ञाने' । दशमतिर्मतिरिति च । सस्रुतः सततमानन्दरसस्यन्दिन्यः ऋतस्य सत्यवचनस्य रामस्य धेनाः सन्देशवचनानि किल तं लङ्कामनयन्त अनयन्। तेन वा सीतां प्रत्यनीयन्त ॥ * ॥

द्वितीयो मन्त्रः–

**पृक्षोवपुःपितुमान्नित्यऽआशयेद्वितीयमासप्तशिवासुमातृषु ।**
**तृतीयमस्यवृषभस्यदोहसेदशप्रमतिञ्जनयन्तयोषणः ॥ २ ॥**

पितुमान् । पितुरित्यन्ननामसु पठ्यते । बकवधे बह्वन्नभुक् । पृक्षः पृतनाक्षपणो भीमो द्वितीयं वपुर्द्वितीयोऽवतारः । नित्यः भगवन्नियतः सन् युद्धेषु आ शेते विहरन् प्रवर्तते । अथ खल्वपि चत्वारो वेदाः पञ्चरात्रं भारतं पुराणानि चेति सप्तशिवासु मातृष्वपि विद्यासु नित्यमा शेते विहरति । अस्य देववृषभस्य तृतीयं वपुर्मध्वाख्यम्, यं दशप्रमतिं प्रवदन्ति, दोहसे ज्ञानदोहाय योषणो वेद-मानिन्यो योषित एव मध्यगेहयोषिद्गता जनयन्त अजनयन्त । श्रीभूदुर्गा एवात्र योषणः । नारायणपण्डिताचार्योऽप्याह– **'श्रीश्रीधरप्रततिशारशरीर-यष्टी'** [म.वि.२.२२] इति ॥ * ॥

तृतीयो मन्त्रः–

**निर्यदीम्बुध्नान्महिषस्यवर्प्पसऽईशानासश्शवसाक्रन्तसूरयः ।**
**यदीमनुप्रदिवोमध्वऽआधवेगुहासन्तम्मातरिश्वामथायति ॥ ३ ॥**

यदीं यस्मादेव बुध्नाद् बुधानां नेतुः मध्वात् महिषस्य महितषड्गुणस्य वर्पसः वरणीयान् गुणानवतारान् वा ईशानासः समर्था अपि सूरयः शवसा सुखेन निः क्रन्त निष्कृतवन्तो निर्ज्ञातवन्त इति । कुतः? यदीं यस्मादेव कारणात् प्रदिवः प्रकृष्टज्ञानो मध्वरूपो मातरिश्वा अविद्यागुहायां गूढं सन्तं महिषं आधवे आधवत्वे सर्वोत्तमत्वे, सर्वोत्तमत्वस्थापनाय तदनुगुणतया वेदान् मथायति । मथित्वा च तत्वनवनीतं विश्राणयतीति ॥ * ॥

चतुर्थो मन्त्रः–

**प्रयत्पितुःपरमान्नीयतेपर्य्यापृक्षुधोवीरुधोदंसुरोहति ।**
**उभायदस्यजनुषंयदिन्वतऽआदिद्यविष्ठोऽअभवद्घृणाशुचिः॥४॥**

यदयं परमात् पितुर्नारायणादेव सर्वकार्येषु सर्वावतारेषु च प्रणीयते तस्मा-देव हि प्राणो नाम । तस्मादेवायं पृच्छ्यन्त इति पृक्षुधः कुवादिप्रश्नान् गो-वृषभो वीरुधो लता इव प्रकर्षेण परितो दंसु दन्तेष्वारोहयति । निष्पिष्य शकलशो निराकरोति । यत् यस्मात् यातीति यत् ज्ञानरूपमस्य जनुषमवताररूपं उभौ



श्रीश्रीधराविन्वतः व्याप्नुतः आदित् तस्मादेवायं यविष्ठः नित्ययुवा, अतितरां भगवता सङ्गतः अभवत् । घृणावान् सत्सु शुचिः प्रकाशमानश्चाभवत् ॥ * ॥

पञ्चमो मन्त्रः–

**आदिन्मातॄराविशद्यास्वाशुचिरहिंस्यमानऽउर्वियाविवावृधे ।**
**अनुयत्पूर्वाऽअरुहत्सनाजुवोनिनव्यसीष्ववरासुधावते ॥ ५ ॥**

आदित् तस्मादेव भगवतः सप्तशिवा मातॄराविशत् । विद्याजलधौ मग्न इत्येतत् । यासु विहरन् आ शुचिः दुर्वादिभिरपव्याख्यानैश्चाहिंस्यमानः उर्व्या स्वरूपशक्त्यैव वि वावृधे वर्धते । सनातनं भगवन्तं सना सदा जवन्त इति सनाजुवः । जुङ् गतौ । पूर्वाः पूर्वोक्ताः सप्तमातॄः अनु उपक्रमाद्यनुगुणं सविमर्शमरुहत् इति यत् तस्मादेव शुचिरहिंस्यमानः । नव्यसीषु अर्वाचीनासु काव्यव्याकरणादिषु त्ववरविद्यासु नि धावते । निःशङ्कं धावते ॥ * ॥

—०—

## 'तांसुते' सूक्तम्

**'तां सु ते कीर्तिम्–'** [ऋ.१०.५४] इति षळृचं वामदेव्येन बृहदुक्थेन दृष्टं त्रैष्टुभं सूक्तम् । इन्द्रनाम्नः प्राणस्येदं भवति । बृहतीसहस्रगोऽयं मन्त्रवर्गः ।

तत्र प्रथमो मन्त्रः–

**ॐ॥ तांसुतेकीर्त्तिम्मघवन्महित्वायत्त्वाभीतेरोदसीऽअह्वयेताम् ।**
**प्रावोदेवाँआतिरोदासमोजःप्रजायैत्वस्यैयदशिक्षऽइन्द्र॥ १ ॥**

हे मघवन् यशस्विन्, इन्द्र प्राणगणनायक, यद् यदा दुर्जनदुर्वचनभरेण भीते रोदसी द्यावापृथिव्यौ, दिवि देवाः पृथिव्यां सात्विकजीवाश्च । अत एवोक्तम्– **'देवाश्चतुर्मुखमुखाः शरणं प्रजग्मुः'** इति । ते महित्वा महित्वेन महिम्ना सह तां तव कीर्तिं सु कीर्तयन्तः । तव कीर्तिं महित्वा पूजयित्वा वा । त्वाम-वनाय अह्वयेताम् । तदा देवान् प्रावः । दासं लोकोपक्षयकरमसुरनिकर-

मातिरः व्यनीनशः । सानुगं रावणं सानुजं दुर्योधनं मायिगणं च । यत् यस्माच्च निमित्तात् दैवासुरभेदेन द्विविधे प्रजावर्गे त्वस्यै एकस्यै दैव्यै प्रजायै ओजः सात्विकं सामर्थ्यमशिक्षः । यत् त्वा अह्वयेताम्, यदशिक्षस्तां ते सुकीर्तिं कीर्तयामीति वा । अस्यै सात्विकप्रजायै तु इति वा च्छेदः । ननु पदपाठः कुप्यति । न कुप्यति । यतोऽयोगमेव व्यवच्छिनत्ति स नान्ययोगम् ॥ ✻ ॥

द्वितीयो मन्त्रः–

**यदचरस्तन्वावावृधानोबलानीन्द्रप्रब्रुवाणोजनेषु ।**
**मायेत्सातेयानियुद्धान्याहुर्न्नाद्यशत्रुन्ननुपुराविवित्से ॥ २ ॥**

हे इन्द्र परमसमर्थ, तन्वा वावृधानः वर्धमानः सन् यदचरः । समुद्रलङ्घने शरीरेण, युद्धरङ्गे बलरूपेण, वादेषु ज्ञानरूपेण वावृधानः । त्वदीयानि च बलानि जनेषु प्रब्रुवाणः । **'निहन्ता शत्रुसैन्यानाम्', 'जरढस्य सुता हताः', 'यस्य त्रीण्युदितानि'** इत्यादिना । भगवतः सामर्थ्यानि जनेषु ब्रुवाणो वा । सा ते मायेत् मृषा विनोदमात्रं ननु । यानि च ते युद्धान्याहुः साऽपि ते माया ननु । कुतः? यतो नाद्य शत्रुं विवित्से विन्दसे । न पुरा नन्वविन्दथाः । त्वत्समानस्य प्रतियोद्धुरेवाभावात् तव युद्धानीति मृषावादोऽयम् । आखणाश्मा हि त्वम् ॥ ✻ ॥

तृतीयो मन्त्रः–

**कऽउनुतेमहिमनस्समस्यास्मत्पूर्वऽऋषयोन्तमापुः ।**
**यन्मातरञ्चपितरञ्चसाकमजनयथास्तन्वꣳस्स्वायाः ॥ ३ ॥**

समस्य समग्रस्य ते महिम्नः अन्तमस्मत्तः पूर्वेऽपि ऋषयः क उ न्वापुः । ॐ इति प्रतृण्णं प्रश्ने, उल्लाघने च । यत् त्वं जगतः मातरं च पितरं च श्रीश्रीधरौ साकं सहैव स्वायास्तन्वः स्वावताररूपेण अजनयथाः प्रकट्यकृथाः ॥ ✻ ॥



चतुर्थो मन्त्रः–

**चत्वारितेऽअसुर्य्याणिनामादाभ्यानिमहिषस्यसन्ति ।**
**त्वमङ्गतानिविश्वानिवित्सेयेभिःकर्म्माणिमघवञ्चकर्थ ॥ ४ ॥**

महिषस्य महितषड्गुणस्य नारायणस्य चत्वारि रूपाणि अदाभ्यानि अहिंस्यानि असुषु रममाणानि नियमयन्ति चेत्यसुर्याणि वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा नाम ते रक्षकाणि सन्ति । अङ्ग, तानि सर्वाणि त्वमेव वित्से, यैः प्रेरितस्त्वं कर्माणि चकर्थ । हे मघवन् यज्ञाराध्य । भुव्यन्तरिक्षे दिवि सत्यलोके चेति महिषस्य महीयत इति महनीयस्य तवैव चत्वारि रूपाणि वा । त्रयोऽवतारा मूलरूपं चेति वा चत्वारि रूपाणि ॥ ✻ ॥

पञ्चमो मन्त्रः–

**त्वंविश्वादधिषेकेवलानियान्याविर्य्याचगुहावसूनि ।**
**काममिन्मेमघवन्माविताारीस्त्वमाज्ञातात्वमिन्द्रासिदाता ॥ ५ ॥**

हे इन्द्र इन्द्रियप्रेरक, त्वं केवलानि केवलं त्वयैव दातुं शक्यानि विश्वानि, यान्याविः प्रकटानि बाह्यान्यैहिकानि, यानि च गुहा निगूढानि आन्तराणि पारत्रिकाणि ज्ञानादीनि वसूनि दधिषे ददासि । हे मघवन् सम्पत्स्वामिन्, मे कामं कामितं मा इत् वितारीः मा खलु विनीनशः । त्वमाज्ञाता मदभिलषिता-नामसि । त्वमेवासि दाता च ॥ ✻ ॥

षष्ठो मन्त्रः–

**योऽअदधाज्ज्योतिषिज्योतिरन्तर्य्योऽअसृजन्मधुनासम्मधूनि ।**
**अधप्रियंशूषमिन्द्रायमन्मब्रह्मकृतोबृहदुक्थादवाचि ॥ ६ ॥**

यो वेदादिज्योतिष्यन्तरर्थाविष्करणेनापूर्वं ज्योतिरदधात् । पुनरधिकं द्योतमानं चकार । सूर्यादिज्योतिषि चान्तः स्थितो ज्योतिरदधात् । यो मधुना मधुरेण

व्याख्यानेन मधुराणि प्रमेयजातानि समसृजत् आविश्चकार । अथेद-मेवंविधमिन्द्राय वायवे प्रियं मन्म मननीयं शूषमज्ञानशोषं बलं ब्रह्मकृतो वेदद्रष्टुः बृहदुक्थादृषेर्मत्तः अवाचि उक्तं स्तुतमभूदिति। ब्रह्म आविष्करोतीति ब्रह्मकृत्, बृहदुक्थं शस्त्रं बृहतीसहस्रगतो मन्त्रभाग इति वा ॥ ※ ॥

—०—

### विष्णोः पदे परमे मध्व उत्सः

**'तदस्य–'** [ऋ.१.१५४.५] इति प्रथममण्डले **'विष्णोर्नु कम्–'** इत्यादिके षळृचे दीर्घतमोदृष्टे विष्णुसूक्ते त्रैष्टुभे पञ्चमो मन्त्रः–

**ॐ॥ तदस्यप्रियमभिपाथोऽअश्यान्नरोयत्रदेवयवोमदन्ति ।**
**उरुक्रमस्यसहिबन्धुरित्थाविष्णोःपदेपरमेमध्वऽउत्सः॥ ५ ॥**

तत् मध्वेनाऽविष्कृतमस्य विष्णोरभीक्ष्णं प्रियं पाति जीवमिति पाथः पन्थानमश्यां प्राप्नुयाम् । यत्र देवमिच्छन्तो दैवस्वभावाः सात्विका नरो मदन्ति । इत्थं तत्ववादाविष्करणेन उरुक्रमस्य बन्धुरात्मीयः स हि विष्णोः परमे पदे उनत्तीति उत्स उत्क उत्सुको वा मध्वः ॥ ※ ॥

—०—

### विद्वान् मध्वः

**'सप्त स्वसॄः– '**[ऋ.१०.५.५] इति दशममण्डले **'एकः समुद्रः–'** इत्यादिके सप्तर्चे प्राणाग्निसूक्ते त्रितदृष्टे त्रैष्टुभे पञ्चमो मन्त्रः–

**सप्तस्वसॄररुषीर्वावशानोविद्वान्मध्वऽउज्जभारादृशेकम् ।**
**अन्तर्येमेऽअन्तरिक्षेपुराजाऽइच्छन्वव्रिमविदत्पूषणस्य ॥ ५ ॥**

वावशानः तत्वप्राकट्यमभिलषन् विद्वान् मध्वः अरुषीः रोचमानाः स्वं स्वतन्त्रं सरन्तीति स्वसॄः सप्त विद्या उज्जहार सतां कं सुखेन दृशे दर्शनाय । अपि



चायं पुराजाः वीशादिदेवेभ्यः पुराजातः, पूर्वं जातेषु देवेष्वप्यास्त इति वा, प्राणः अन्तर्हृदयान्तरिक्षे जीवान् येमे नियमयति । स एव चेह भगवदादेशं चिकीर्षन् पूषणस्य पूर्णबलानन्दस्य विष्णोः वव्रिं गुणजातम्, वरणाद् वव्रिं स्वरूपं वा अविदत् अवेदयत्। **'निर्णिक्, वव्रिः, वर्पः, वपुः'** इति रूपनामसु निघण्टुः । **'वर्पाख्यान् गुणान्'** इति च स्म हि स्मरन्ति ॥ ※ ॥

**इति श्रीमध्वविजयटीकागतप्राणमन्त्रोद्धारः समाप्तः**

—०—

# षट्प्रश्नोपनिषद्गता प्राणस्तुतिः सटीका



**ॐ॥ एषोऽग्निस्तपत्येष सूर्य्य एष पर्ज्जन्यो मघवानेष वायुः ।**
**एष पृथिवी रयिर्द्देवः सदसच्चामृतं च यत् ॥ १ ॥**

**ॐ ॥ नमः प्राणाय गुरवे परवेदनहेतवे ।**
**पुरवे कल्पतरवे शरवे परवादिनाम् ॥**

द्वाभ्यां परस्परं भाषमाणास्तत्वाभिमानिनः प्राणं निर्दिशन्तः स्तुवन्ति– एषोऽग्निस्तपति । एष एवाग्नौ सूर्ये च स्थितः तपति । पर्जन्यस्थो वर्षति । मघवति स्थित्वा देवान् नियमयति च वर्षति च । भूतवायुस्थः प्रवहतीत्यादि । तेन मुख्यतस्तन्नामा चायमेव । तथाचोक्तमैतरेयभाष्ये– **'वायुरग्निरिति प्रोक्तो ह्यग्रणीत्वादथाङ्गिनाम् । नेतृत्वाददनाद्वाऽपि तस्य स्रष्टा जनार्दनः । स वायुर्वायुरूपेण जगत्पाति शरीरगः । आदित्यस्थेन रूपेण जगद् याति प्रकाशयन् । अग्निस्थेन तु रूपेण हूयते सर्वयष्टृभिः । आदाय यात्यायुरिति स एवाऽदित्य उच्यते । तत्सम्बन्धात्तु तन्नाम सूर्यस्याग्नेस्तथैव च'** इत्यादि । **'यदधीना यस्य सत्ता तत् तदित्येव भण्यते'** इति च । एष पृथिवीस्थः सर्वधारकः । एष रयिस्थो देवो वाक्पतिः वाचं व्याहारयति । यद् वयमेनं स्तुमः सा किलास्यैव करुणा ॥ २ ॥

**अराइव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।**
**ऋचो यजूंषि सामानि यज्ञः क्षत्रं च ब्रह्म च ॥ २ ॥**

रथचक्रस्य मध्यं नाभिः । प्रान्तो नेमिः । नेमिं नाभौ संयोजयन्ति काष्ठान्यरा उच्यन्ते । अयं प्राणः सर्वस्य नामरूपात्मकस्य प्रपञ्चस्याऽश्रयः, नाभिरिवाराणाम् । तदेव विविच्याऽह– **ऋचो यजूंषि सामानि** । शब्दजातोप-

लक्षणमेतत् । **यज्ञ** इति क्रियाजातोपलक्षणम् । **ब्रह्म च क्षत्रं** चेति चेतन-जातोपलक्षणम् । पूजारूपं कर्म मुख्यमिति तस्य मुखतो निर्देशः । यज्ञश्च मुख्यतो ब्रह्मक्षत्रनिर्वर्त्य इति तयोः ॥ २ ॥

**प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।**
**तुभ्यं प्राण प्रजास्त्विमा यत् प्राणैः प्रतितिष्ठसि ॥ ३ ॥**

इदानीमपरोक्षतः स्तुवन्ति– प्रजापतिरिति । गर्भस्थप्रजानां पालकः सन् त्वमेव गर्भे चरसि । त्वमेव जनयसि च । तुभ्यमिति त्वदधीना इत्यर्थः । यत् त्वं प्राणैः इन्द्रियाभिमानिदेवैः सह तेषां प्रतिष्ठायै स्वयमेव प्रतितिष्ठसि ॥ ३ ॥

**देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।**
**ऋषीणां चरितं सत्यमथर्वाऽङ्गिरसामपि ॥ ४ ॥**

देवानां हव्यं वहतीति वह्निः । त्वं तस्यापि नियमनाद् वह्नितमः । पितॄणां स्वंस्वं भागं धत्ते ददाति चेति 'स्वधा' पितृपतिः । त्वं तस्यापि नियमनात् प्रथमा स्वधा । ऋषीणां चरितं सत्यं च त्वमेव नियमयसि । अङ्गिरसामथर्व-शाखिनामथर्ववेदेष्वधीतमपि त्वमेव नियच्छसि ॥ ४ ॥

**इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।**
**त्वमन्तरिक्षे चरसि सूर्य्यस्त्वं ज्योतिषां पतिः ॥ ५ ॥**

मघवानित्युक्तमपि विशेषानुसन्धानाय पुनराह– इन्द्रस्त्वं तेजसेति । यथाऽग्नेर्नियमनम्, **'देवानामसि वह्नितमः'** इति पुनरुक्तम् । तेजसा पराक्रमेण इन्द्रस्यापि नियन्ता । रुजां द्रावणेन **'रुद्रोऽसि परिरक्षिता'** । **'प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः । तेनान्नेनाऽप्यायस्व'** [तै.आ.१०.३७] इति नारायणोपनिषदि । त्वं प्राणानिन्द्रियाणि तद्देवांश्च ग्रन्थयसि । यद्यपि रोदयसीति रुद्रः कथ्यसे । अथापि रुजां द्रावणेन रुद्रः सन् मां विश । यद्यपि संहरन्नन्तकः कथ्यसे । अथापि दोषाणामन्तकः सन् मां विश । मदर्पितेनान्नेन प्रीतो भव ।



मां चाभिवर्द्धयेति मन्त्रार्थः । **'त्वादत्तेभी रुद्र शन्तमेभिः शतं हिमा अशीय भेषजेभिः । व्यस्मद् द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः'** [ऋ.सं.२.३३.२; तै.ब्रा.२.८.६.८] इति च मन्त्रवर्णः । गृत्समदस्यार्षं त्रैष्टुभं रौद्रं सूक्तम् । अयं मन्त्रार्थः– त्वद्दत्तैः सुखतमैः भेषजैः शतं हिमाः हेमन्तान्, शतं संवत्सरानित्येतत् । अशीय व्याप्नुयाम्, जीवेयम् । अस्मत्तः द्वेषः द्विषः वितरं नितरां वि चातयस्व निवारय । अंहः दुरितं च विचातयस्व । विषूचीः विष्वग् व्यापिनीरमीवाः रोगांश्च विचातयस्व । तस्मिन्नेव सूक्ते चतुर्थो मन्त्रः– **'मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती । उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि'** [ऋ.सं.२.३३.४] इति । अयमर्थः– मा त्वां रुद्र, क्रोधयाम दुर्विहितैर्नमस्कारैः । मा च दुष्टया स्तुत्या क्रोधयाम । मैव च देवर्षभ सहूत्या नीचैः सहाऽह्वानेन । नो वीरान् पुत्रान् भेषजैः उत् अर्पय उत्कृष्टतया योजय । यतस्त्वां भिषजां भिषक्तमं शृणोमि, अत एवं प्रार्थ्यस इति । त्वमेव सूर्यस्थो ज्योतिषां पतिः ॥ ५ ॥

**यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।**
**आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ ६ ॥**

यदा पर्जन्यस्थः त्वमभिवर्षसि अथ तव इमाः प्रजाः कामाय अस्मत्काम-पूरणाय यथेष्टं अन्नं भविष्यतीत्यानन्दरूपास्तिष्ठन्ति । **'यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति'** [६.२.१] इति, **'यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीति'** [७.१.१३] इति च च्छन्दोगोपनिषदि ॥ ६ ॥

**व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः ।**
**वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः ॥ ७ ॥**

'अन्यस्य संस्कर्तुरभावादसंस्कृतो व्रात्यस्त्वम् । स्वभावत एव शुद्ध इत्यभिप्रायः' इति मायावादभाष्यम् । 'संस्कारहीनो ब्राह्मणोऽपि त्वमेव' इत्यन्ये । सैषाऽपार्थप्रक्रिया । वेदव्रतप्रवर्तकत्वाद् व्रात्यः । जीवव्रातनियामकत्वाद्

वा। एकऋषिः प्रधानज्ञानी। एकर्षिनामाऽथर्वाङ्गिरसां प्रवर्तको योऽग्नि-स्तस्मिन् स्थितश्च। सतां पालकस्त्वं विश्वस्यात्ता। वयमाद्यस्य तवादनीयस्य दातारः। वयमाद्यस्य आदिभूतस्य तव करदातार इति च। हे मातरिश्वन् त्वं नः पिता। अपि च मातरिश्वनः कोणवायोः पिता त्वम् ॥ ७ ॥

**या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि।**
**या च मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥ ८ ॥**

वागादिदेवेषु **'या ते तनूः सन्तता प्रतिष्ठिता'** सततं प्रतिष्ठिता। सर्वत्र व्याप्य प्रतिष्ठिता च। **'शिवां तां कुरु'** अनुत्क्रमणेनास्माकं शिवदां कुरु ॥ ८ ॥

**प्राणस्यैतद् वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम्।**
**मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥ ९ ॥**

**॥ इति षट्प्रश्नोपनिषद्गता प्राणस्तुतिः ॥**

—०—

'प्राणस्य' तव 'वशे सर्वम्'। वश इतीच्छा। इच्छाधीनमित्येतत्। न केवलं पिण्डाण्डे। त्रिदिवे स्वर्लोके यत् ते रूपं प्रतिष्ठितम्। तस्य ते प्राणस्य त्रिदिवे यद् वस्तुजातमुपस्थितमिति वा। हे श्रीः, अयि सरस्वति, त्वं च मातेव नः पुत्रान् रक्षस्व। इति सपत्नीकः प्राणः स्तुतः। **'शंरूपाने नित्यरतेरियं श्रीः'** इत्युक्तत्वात्। केवलप्राणपरतया योजने श्रीरिति श्रियः। श्रियश्च प्रज्ञां च विधेहि न इति ॥ ९ ॥

एवं द्वितीयप्रश्नान्ते नव प्राणमन्त्राः पठ्यन्ते। वैदिकी वायुस्तुतिरियम्। तत्व-मानिनो देवा ऋषयः। प्राणो देवता। 'एषोऽग्निः–' इति प्रथममन्त्रे प्रथमचरणे तावत् 'तपति+एषः' इति, 'सूरियः' इति वा क्षैप्राक्षरस्य विश्लेषेण दशा-क्षरा पङ्क्तिः। उभयोर्विश्लेष एकादशाक्षरा त्रिष्टुप्। अविश्लेषे पुनर्बृहती। द्वितीये द्वादशाक्षरा जगती। तृतीये नवाक्षरा बृहती। चरमे च स्फुटमनुष्टुप्। संहत्य



पङ्क्तिः, एकाक्षरोना निचृत्पङ्क्तिः, द्व्यक्षरोना विराट्पङ्क्तिः, द्व्यक्ष-राधिका स्वराड् बृहती वा। द्वितीयमन्त्रे स्फुटमनुष्टुप्। तृतीये प्रथमपाद एका-क्षराधिकाऽनुष्टुप्। तुरीयेऽपि तथा। पञ्चमे स्फुटं केवलाऽनुष्टुप्। षष्ठे पूर्वार्धे '–वर्षसि+अथेमाः' इति पादयोर्विश्लेषेण स्फुटमनुष्टुप्। उत्तरार्धे तुरीयचरणे नवाक्षराणीति एकाक्षराधिका भुरिगनुष्टुप्। अविश्लेषे केवलाऽनुष्टुप्। सप्तमे केवलाऽनुष्टुप्। अष्टमे प्रथमचरणे पङ्क्तिः। अन्यत्रानुष्टुप्। संहत्य च स्वरा-डनुष्टुप्। नवमे च मन्त्रे चरमचरणे नवाक्षराणीति बृहत्योपसंह्रियते प्राण-स्तुतिः। भुरिगनुष्टुप्। केचित्तु **'श्रीश्च प्रज्ञां च धेहि नः'** इत्यष्टाक्षरमेव पादं पठन्ति। अन्ते पुनरितिकरणेन प्राणस्तुतिसमाप्तिं द्वितीयप्रश्नसमाप्तिं चाऽह ॥ ✽ ॥

**प्राणस्तुतिं व्याचकार षट्प्रश्नोपनिषद्गताम्।**
**इमामाचार्यगोविन्दः प्राणचिन्तनलोलुपः ॥**

**इत्याचार्यगोविन्दस्य कृतिषु प्रणस्तुतिटीका समाप्ता।**

—०—






ॐ

ॐ ॥ प्राणनारायणौ नत्वा सखायौ सयुजौ सदा।
अथर्वाङ्गिरसां प्राणसूक्तं व्याख्यायते मनाक् ॥

अथर्वसंहितायाः शौनकशाखायामेकादशे काण्डे द्वितीयेऽनुवाके पठ्यमानं चतुर्थं सूक्तं प्राणसूक्तम्। यमर्थसूक्तमित्याचक्षते। परमार्थो नारायणः। अर्थः प्राण इति। तमेतं प्राणसूक्तं पुनः सूक्तत्रयात्मकमाहुः। आद्या दश मन्त्राः प्रथमं सूक्तम्। ततो दश द्वितीयम्। अवशिष्टाः षट् तृतीयमिति।

पिप्पलादशाखायां तु षोडशे काण्डे सूक्तत्रयम्। ऐकविंशादा त्रयोविंशम्। पाठश्च किञ्चिदिव भिन्नः। तत्र तावच्छौनकीयं पाठमाश्रित्य व्याख्यास्यामः।

आत्रेयस्य वैदर्भेरार्षम्। अनुष्टुप्प्रायं छन्दः। विशेषस्तत्रतत्रोच्यते। प्राणदेवत्यमित्युदितम्। मुख्यः प्राणो नारायणः। मध्यमः प्राणः पवमानः। पवमानपरतया तु व्याख्यायते। नारायणः सर्वत्रान्तर्यामितयाऽनुसन्धेय इति स्थितम्।

विनियोगं बहुधा वर्णयन्त्याथर्वणाः। उपनयनकाले दक्षिणेन पाणिना माणवकस्य नाभिं संस्पृश्य सूक्तमिदमाचार्यो जपेदिति कौशिकः। एवमायुष्कामाः सूक्तेनानेन दक्षिणं कर्णमनुमन्त्रयन्ते। आयुष्यहोमे चानेन सूक्तेनाऽज्यहोमो विहित इत्यन्ये। तथा ग्रहयज्ञे शनैश्चरस्य हविराज्यहोमः, शान्त्यर्थे लक्षहोमे चेत्यादि। प्राणनारायणयोः प्रीत्यर्थे पठने विनियोग इति सर्वसङ्ग्रहः॥

तत्र प्रथमो मन्त्रः–

**प्राणायनमोयस्यसर्वमिदंवशे ।**
**योभूतस्सर्वस्येश्वरोयस्मिन्त्सर्वम्प्रतिष्ठितम् ॥ १ ॥**

**प्राणाय । नमः । यस्य । सर्वम् । इदम् । वशे ॥**
**यः । भूतः । सर्वस्य । ईश्वरः । यस्मिन् । सर्वम् । प्रति+स्थितम् ॥ १ ॥**

सर्वमिदं जीवजातम्, चेतनाचेतनात्मकं वा जगत्, यस्य वशे यदिच्छानियतम्, यश्च भूतः जीवेषु सर्वाधिकभूतिमान्, भूत एव, न कदाऽप्यभूतः, सर्वदा विद्यमान इति वा, **'प्रळयेऽपि प्रतिभातपरावरः'** इत्येतत्, यश्च सर्वस्य जीवजातस्य ईश्वरः स्वामी, जीवकलामानित्वात्, यस्मिंश्च सर्वं जगत् प्रतिष्ठितम्, प्रत्येकमाश्रित्य स्थितम्, तस्मै प्राणाय सर्वचेष्टकाय पवमानाय नमोऽस्तु ॥

ऋच्यस्यां शङ्कुमती नामानुष्टुप् छन्दः, प्रथमः पादः पञ्चाक्षर अन्ये त्रयोऽष्टाक्षरा इति । तथाह्याह पिङ्गलनागः– **'एकस्मिन् पञ्चके छन्दः शङ्कुमती'** (३.५५) इति । एकस्मिन् पादे पञ्चाक्षरे सति सर्वमपि च्छन्दः शङ्कुमती नाम भवतीत्यर्थः ॥ १ ॥

अथ द्वितीयो मन्त्रः–

**नमस्तेप्राणक्रन्दायनमस्तेस्तनयित्नवे ।**
**नमस्तेप्राणविद्युतेनमस्तेप्राणवर्षते ॥ २ ॥**

**नमः । ते । प्राण । क्रन्दाय । नमः । ते । स्तनयित्नवे ॥**
**नमः । ते । प्राण । वि+द्युते । नमः । ते । प्राण । वर्षते ॥ २ ॥**

अत्र तृतीयचरणे **'नमस्तेऽस्तु विद्युते'** इति पैप्पलादः पाठः ।

मेघे स्थित्वा क्रन्दाय, कर्षकानाह्वयन्निव गुडुगुडायमानाय ईषद् ध्वनते । क्रदि आह्वाने । स्तनयित्नवे स्तनितेन महानादं कुर्वते । विद्युति स्थित्वा विद्योतमानाय । मेघे स्थित्वा वर्षणकर्त्रे नमः । प्राण ते नम इत्यावृत्तिस्तात्पर्याधिक्यद्योतनी । स्फुटमनुष्टुप् ॥ २ ॥



अथ तृतीयो मन्त्रः–

**यत्प्राणस्तनयित्नुनाभिक्रन्दत्योषधीः ।**
**प्रवीयन्तेगर्भान्दधतेथोबह्वीर्विजायन्ते ॥ ३ ॥**

**यत् । प्राणः । स्तनयित्नुना । अभि+क्रन्दति । ओषधीः ॥**
**प्र । वीयन्ते । गर्भान् । दधते । अथोइति । बह्वीः । वि । जायन्ते ॥ ३ ॥**

पैप्पलादा उत्तरमन्त्रस्य पूर्वार्धमत्र पठन्ति । अन्यत् समानम् ।

'प्राणस् स्तनयित्नुना' इत्यत्र संहितायां **'लोपः समाने'** इत्येकसकारलोपः । स्तनयित्नुना मेघध्वनिना ओषधीः अभिक्रन्दति आहूयाभिमुखीकरोतीव । यथा महोक्षो गा इव वृषस्यन्तीः । अभिक्रन्दनमात्रेण गर्भान् प्रकर्षेण वीयन्ते गृह्णन्ति । गृहीतान् गर्भान् दधते च फलवत्त्वाय । अथो बह्वीः धान्यसन्ततीः विविधतया जायन्ते जनयन्ति ॥

अत्र द्वितीयचरणे 'अभिक्रन्दति+ओषधीः' इति विश्लेषेण केवलाऽनुष्टुप् भवति ॥ ३ ॥

अथ चतुर्थो मन्त्रः–

**यत्प्राणऽऋतावागतेभिक्रन्दत्योषधीः ।**
**सर्वन्तदाप्रमोदतेयत्किञ्चभूम्यामधि ॥ ४ ॥**

**यत् । प्राणः । ऋतौ । आ+गते । अभि+क्रन्दति । ओषधीः ।**
**सर्वम् । तदा । प्र । मोदते । यत् । किम् । च । भूम्याम् । अधि ॥ ४ ॥**

तृतीयमन्त्रस्य पूर्वार्धमत्र पैप्पलादाः पठन्ति । 'यदु किञ्च' इति च ।

ऋतौ वर्षर्तावागते सति। गवामृतुकाले वृषभ इवेति ध्वनिः। तदा अधि भूम्यां भूमेरुपरि यत् किञ्च जीवजातं तत् सर्वं प्रमोदमाप्नोति वर्षणेन नः प्रीणयति प्राण इदानीमिति॥

अत्र द्वितीयचरणे पूर्ववत् 'अभिवर्षति+ओषधीः' इति, तुरीयचरणे च 'भूमियामधि' इति विश्लेषेण केवलाऽनुष्टुप्॥ ४॥

अथ पञ्चमो मन्त्रः–

**यदाप्राणोऽअभ्यवर्षीद्वर्षेणपृथिवीम्महीम्।**
**पशवस्तत्प्रमोदन्तेमहोवैनोभविष्यति ॥ ५॥**

**यदा। प्राणः। अभि+अवर्षीत्। वर्षेण। पृथिवीम्। महीम्॥**
**पशवः। तत्। प्र। मोदन्ते। महः। वै। नः। भविष्यति॥ ५॥**

**'यदा प्राणो अभ्यक्रन्दत्'** इति पैप्पलादः पाठः। महीं महतीं विशालां पृथिवीम्। वर्षेण वृष्टिजालेन अभ्यवर्षीत् अभ्यषिञ्चत्। तृणसमृद्ध्या मह उत्सवो नो भविष्यतीति पशवस्तदा प्रहृष्यन्ति॥ ५॥

अथ षष्ठो मन्त्रः–

**अभिवृष्टाऽओषधयःप्राणेनसमवादिरन्।**
**आयुर्वैनःप्रातीतरस्सर्वानस्सुरभीरकः ॥ ६॥**

**अभि+वृष्टाः। ओषधयः। प्राणेन। सम्। अवादिरन्॥**
**आयुः। वै। नः। प्र। अतीतरः। सर्वाः। नः। सुरभीः। अकः॥ ६॥**

**'आयुर्वै नः प्राचीचरः'** इति पैप्पलादः पाठः। अन्यत् समानम्।

प्राणेनाभिवृष्टा ओषधयः प्राणेन सह समवादिरन् समवदन्त। **'ओषधयः संवदन्ते सोमेन सह'** इति हि श्रुतिः। **'सोमः पवमानः'** इति च। किमिति समवदन्त? हे प्राण, त्वं न आयुः प्रातीतरः अवर्धयः। 'प्राचीचरः' इति पाठेऽप्ययमेवार्थः। सर्वा नः सुरभीः सुगन्धयुक्ता अकरोः। स्फुटमनुष्टुप्॥ ६॥



अथ सप्तमो मन्त्रः–

**नमस्तेऽअस्त्वायतेनमोऽअस्तुपरायते।**
**नमस्तेप्राणतिष्ठतऽआसीनायोततेनमः ॥ ७॥**

**नमः। ते। अस्तु। आ+यते। नमः। अस्तु। परा+यते॥**
**नमः। ते। प्राण। तिष्ठते। आसीनाय। उत। ते। नमः॥ ७॥**

पैप्पलादानां पाठेऽयमष्टमो मन्त्रः। अत्र पठिष्यमाणोऽष्टमस्तेषां सप्तमः।

गर्भे जीवप्राणनार्थमागच्छते ते नमः। मरणकाले देहात् परागच्छते ने नमः। श्वासरूपेण अन्तरायते बहिर्निर्यते चास्तु ते नमः। यः कश्चिदायाति तदन्तः स्थित्वा आयते नमः। यः पुनः पराङ्मुखो याति तत्र नियामकतया स्थित्वा परायते नमः। न केवलं गमनागमनादिकं तदधीनम्। यः कोऽपि तिष्ठति, यश्चोपविशति तत्र स्थिताय, आसीनाय च ते नमः। सर्वाश्चेष्टाः प्राणाधीनाः प्राणनियम्या इत्येतत्॥

अत्र प्रथमचरणे 'अस्तु+आयते' इति विश्लेषेण केवलाऽनुष्टुप्॥ ७॥

अथाष्टमो मन्त्रः–

**नमस्तेप्राणप्राणतेनमोऽअस्त्वपानते।**
**पराचीनायतेनमःप्रतीचीनायतेनमस्सर्वस्मैतऽइदन्नमः ॥ ८॥**

**नमः। ते। प्राण। प्राणते। नमः। अस्तु। अपानते॥**
**पराचीनाय। ते। नमः। प्रतीचीनाय। ते। नमः। सर्वस्मै। ते। इदम्। नमः॥**
**॥ ८॥**

**'प्रतीचीनाय तेन नमः पराचीनाय ते नमः'** इति च व्यत्ययेन पठन्ति पैप्पलादाः।

यः प्राणिति प्राणनक्रियां करोति देहे तस्मै प्राणते प्राण ते नमः। यश्चापानिति अपानक्रियां करोति तस्मा अपानते प्राण ते नमः। **'प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्'** इति भगवद्वचनम्। यः पराक् बहिराकाशे अञ्चति सञ्चरति तस्मै पराचीनाय ते नमः। यः पुनः प्रत्यक् देहस्यान्तश्चरति तस्मै प्रतीचीनाय च ते नमः। किमदइदमिति पृथक् कथनेन। सर्वस्मै सर्वगताय सर्वक्रियाहेतवे सर्वसमर्थाय त इदं नमोऽस्तु। अत्र पथ्यापङ्क्तिश्छन्दः। पञ्चात्र पादा अष्टाक्षरा इति। तथाहि पिङ्गलनागः– **'पथ्या पञ्चभिर्गायत्रैः'** (३.४८) इति। द्वितीयचरणे 'अस्तु+अपानते' इति विश्लेषेणाष्टाक्षरता॥ ८॥

अथ नवमो मन्त्रः–

**यातेप्राणप्रियातनूर्य्योतेप्राणप्रेयसी।**
**अथोयद्भेषजन्तवतस्यनोधेहिजीवसे ॥ ९ ॥**

**या। ते। प्राण। प्रिया। तनूः। योइति। ते। प्राण। प्रेयसी॥**
**अथोइति। यत्। भेषजम्। तव। तस्य। नः। धेहि। जीवसे॥ ९॥**

हे प्राण, या ते प्रिया तनूः साधनशरीरम्, तत्रापि या प्रेयसी प्रियतमा विप्रशरीरम्, अथ यत् तव भेजषम् अध्यात्मविद्योपदेशनम्, **'यद्वै मनुरवदत् तद् भेषजम्'** इति स्मरणात्। तस्येति षष्ठी द्वितीयार्थे। तव त्वदधीनं तत् त्रयमस्माकं धेहि देहि जीवसे श्रेष्ठजीवनायेति॥ ९॥

अथ दशमो मन्त्रः–

**प्राणःप्रजाऽअनुवस्तेपितापुत्रमिवप्रियम्।**
**प्राणोहसर्वस्येश्वरोयच्चप्राणतियच्चन ॥ १० ॥**

**प्राणः। प्रऽजाः। अनु। वस्ते। पिता। पुत्रम्+इव। प्रियम्॥**
**प्राणः। ह। सर्वस्य। ईश्वरः। यत्। च। प्राणति। यत्। च। न॥ १०॥**



**'प्राणः प्रजा अनूपास्ते'** इति पैप्पलादः पाठः। अन्यत् समानम्।

प्राणः सर्वाः प्रजाः तत्तदनुगुणं वस्ते आच्छादयति स्वसन्निधानेन प्रियं पुत्रमिव पिता। 'उपास्ते' इति पाठे सन्निहितो भवतीत्येवार्थः। यथा पिता पुत्रं गाढमालिङ्गति तथेत्येतत्। यच्च प्राणति चेष्टते, यच्च न चेष्टते तस्य जङ्गमस्थावरात्मकस्य चेतनाचेतनात्मकस्य वा सर्वस्य प्राणो हीश्वरः। स्फुटमनुष्टुप्॥ १०॥

**इति द्वितीयानुवाके चतुर्थं सूक्तम्।**

—०—

अथ पञ्चमे प्रथमो मन्त्रः–

**प्राणोमृत्युःप्राणस्तक्माप्राणन्देवाऽउपासते।**
**प्राणोहसत्यवादिनमुत्तमेलोकऽआदधत् ॥ ११ ॥**

**प्राणः। मृत्युः। प्रणः। तक्मा। प्राणम्। देवाः। उप। आसते॥**
**प्राणः। ह। सत्य+वादिनम्। उत्+तमे। लोके। आ। दधत्॥ ११॥**

**'प्राणो मृत्युः प्राणो अमृतम्'** इति पैप्पलादः पाठः।

प्राणो जीवानां मृत्युप्रदः देहादपगमेन। स एव तक्मा कष्टप्रदः रोगादिना। तं देवोत्तमं सर्वे तत्वमानिनो देवा उपासते। स हि प्राणानां प्राणः। भगवान् सत्यः साधुगुण इति वादिनम्, विश्वं सत्यमिति वादिनमुत्तमे पुण्यलोके मोक्षे वा आदधाति। **'वायुश्च तदनुज्ञया'** इति हि स्मरन्ति। यथार्थवादिनमुत्तमे स्वर्गादावादधाति। उत्तमे लोके पुण्यशरीरे वा॥ ११॥

अथ द्वितीयो मन्त्रः–

**प्राणोविराट्प्राणोदेष्ट्रीप्राणंसर्वऽउपासते।**
**प्राणोहसूर्य्यश्चन्द्रमाःप्राणमाहुःप्रजापतिम् ॥ १२ ॥**

**प्रा॒णः । वि॒+राट् । प्रा॒णः । देष्ट्री॑ । प्रा॒णम् । सर्वे॑ । उप॑ । आ॒स॒ते॒ ॥**
**प्रा॒णः । ह॒ । सूर्य॑ः । च॒न्द्रमा॑ः । प्रा॒णम् ।आ॒हु॒ः । प्र॒जा+प॑तिम् ॥ १२ ॥**

तृतीयचरणे **'प्राणोऽग्निश्चन्द्रमाः सूर्यः'** इति पैप्पलादः पाठः ।

प्राणो विराड् ब्रह्माण्डमानी । **'तस्माद् विराडजयात विराजो अधि पूरुषः'** इति श्रवणात् । पुरुषेषु स्थित्वा विराजनाद्वा । प्राणस्तत्ववादस्योपदेष्ट्री देवता । वाचि स्थितं वा रूपम् । स्त्रीषु स्थित्वा शिशूनामुपदेष्ट्री वा । सर्वे जीवाः प्राणमेवोपासते जानन्तः, अजानन्तो वा । प्राण एव सूर्यगतः प्रतपति । चन्द्रगतः प्रकाशते । 'प्राणोऽग्निः' इति पाठेऽग्निगतश्च स एव । प्राणमाहुः प्रजापतिं ब्रह्माणमेष्यन्तम् । **'आदित्यो हवै प्राणो रयिरेव चन्द्रमाः'**, **'स एष वैश्वानरः प्राणोऽग्निरुदयते'** इति च षट्प्रश्नोपनिषदि । **'एषोऽग्निस्तपत्येष सूर्यः'** इत्यादि च । **'स वायुर्वायुरूपेण जगत् पाति शरीरगः । आदीत्यस्थेन रूपेण जगद् याति प्रकाशयन् । अग्निस्थेन तु रूपेण हूयते सर्वयष्टृभिः'** इत्यादि च स्मरन्ति ॥ १२ ॥

अथ तृतीयो मन्त्रः–

**प्रा॒णा॒पा॒नौव्री॑हिय॒वाव॑न॒ड्वान्प्रा॒णऽउ॑च्यते ।**
**यवे॑हप्रा॒णऽआहि॑तोपा॒नोव्री॒हिरु॑च्यते ॥ १३ ॥**

**प्रा॒णा॒पा॒नौ । व्री॒हि॒+य॒वौ । अ॒न॒ड्वान् । प्रा॒णः । उ॒च्य॒ते ॥**
**यवे॑ । ह॒ । प्रा॒णः । आ+हि॑तः । अ॒पा॒नः॒ । व्री॒हिः । उ॒च्य॒ते ॥ १३ ॥**

व्रीहिषु यवेषु च प्राणापानयोर्विशेषसन्निधानम् । अत एव व्रीहियवयोर्धान्यराजत्वम् । एवमनडुत्सु विशेषतः प्राण आहित उच्यते । वृषभो हि बलीयान् भवति । पुरुषेषु च बलीयांसं पुरुषवृषभमाहुः । विशेषतो वायुसन्निधानभाक् पुरुषः पुरुषवृषभ इति । व्रीहियवौ प्राणापानावित्युक्तम् । तत्र क्रमविशेषमाह– यवे प्राणो व्रीहावपान इति । यवस्थः प्राणयति । व्रीहिस्थोऽपनयति रोगादीनिति । 'आहितो+अपानो–' इति विश्लेषेण केवलाऽनुष्टप् ॥ १३ ॥



अथ चतुर्थो मन्त्रः–

**अपा॑नति॒प्राण॑ति॒पुरु॑षो॒गर्भे॑ऽअन्त॒रा ।**
**य॒दात्वम्प्रा॑ण॒जिन्व॒स्यथ॒सजा॑यते॒पुन॑ः ॥ १४ ॥**

**अप॑ । अ॒न॒ति॒ । प्र । अ॒न॒ति॒ । पुरु॑षः । गर्भे॑ । अ॒न्त॒रा ॥**
**य॒दा । त्वम् । प्रा॒ण॒ । जिन्व॑सि । अथ॑ । सः । जा॒य॒ते॒ । पुन॑ः ॥ १४ ॥**

उत्तरार्धे पैप्पलादः शुद्धः पाठो नोपलभ्यते । 'यावत् त्वं प्राण जिन्वः स डिम्बो जायते त्वत्' इति स्यात् ।

गर्भे अन्तरा स्त्रीगर्भस्य मध्ये यदा पुरुषो नारायणः प्राणति गर्भस्थजीवस्य त्वां प्राणनव्यापारवन्तं करोति, अपाननव्यापारवन्तं च । भ्रूणरक्षार्थं प्राणापानौ गर्भे स्थापयतीत्यर्थः । हे प्राण, यदा त्वं गर्भगतं जीवं जिन्वसि प्रीणयसि, जिवि प्रीणने, अथो अनन्तरमेव स पुनर्भूमौ जायते । एवं पुनःपुनर्जायते च ॥

अत्र निचृदनुष्टुप् छन्दः । प्रथमपादे सप्ताक्षरत्वात् । उत्तरार्धे च 'जिन्वसि+अथो' इति विश्लेषेणाक्षरपूर्तिः । **'ऊनाधिकेनैकेन निचृद्भुरिजौ'** (३.५९) इति पिङ्गलनागः । एकेनाक्षरेणोनेन निचृत् । अधिकेन भुरिगित्यर्थः ॥ १४ ॥

अथ पञ्चमो मन्त्रः–

**प्रा॒णमा॑हुर्मात॒रिश्वा॑नं॒वातो॑हप्रा॒णऽउ॑च्यते ।**
**प्रा॒णेह॑भू॒तम्भव्य॑ञ्चप्रा॒णेस॒र्वम्प्रति॑ष्ठितम् ॥ १५ ॥**

**प्रा॒णम् । आ॒हु॒ः । मा॒त॒रिश्वा॑नम् । वात॑ः । ह॒ । प्रा॒णः । उ॒च्य॒ते ॥**
**प्रा॒णे । ह॒ । भू॒तम् । भव्य॑म् । च॒ । प्रा॒णे । सर्व॑म् । प्रति॑+स्थितम् ॥ १५ ॥**

प्राणं मातरिश्वानमाहुः– **'पिता त्वं मातरिश्व नः'** इति । मातरि आकाशे श्वयति गच्छति वर्धते चेति । **'टुओ श्वि गतिवृद्ध्योः'** । मातरि वेदवाचि श्वयति निरा-

तङ्कं भगवत्परतानुसन्धानेन विहरतीति। जगन्निर्मातरं वा श्वयति गच्छति। स एव प्राणो बहिर्गतो वात उच्यते। देहस्थः प्राणः। भूतं भव्यं वर्तमानं च भविष्यच्च सर्वं प्राणे प्रतिष्ठितम्।

अस्यामृचि भुरिगनुष्टप् छन्दः प्रथमपादो नवाक्षर इत्येकाक्षराधिक्यात्॥ १५॥

अथ षष्ठो मन्त्रः–

**आथर्वणीराङ्गिरसीर्दैवीर्म्मनुष्यजाऽउत।**
**ओषधयःप्रजायन्तेयदात्वम्प्राणजिन्वसि ॥ १६॥**

**आथर्वणीः। आङ्गिरसीः। दैवीः। मनुष्य+जाः। उत॥**
**ओषधयः। प्र। जायन्ते। यदा। त्वम्। प्राण। जिन्वसि॥ १६॥**

**'दैवीर्म्मानुषजाश्च याः। सर्वाः प्रमोदन्त्वोषधीः'** इति पैप्पलादः पाठः।

यदा त्वं प्राण जिन्वसि वृष्टिदानेन प्रीणयसि तदा अथर्वणा सृष्टाः अङ्गिरोभिः सृष्टाः, देवैः सृष्टाः मनुष्यजा अपि ओषधयः प्रजायन्ते। ओषधयः इत्यृचश्च। अथर्वादिभिर्दृष्टाः। प्रजायन्ते प्रादुर्भवन्ति॥ १६॥

अथ सप्तमो मन्त्रः–

**यदाप्राणोऽअभ्यवर्षीद्वर्षेणपृथिवीम्महीम्।**
**ओषधयःप्रजायन्तेथोयाःकाश्चवीरुधः ॥ १७॥**

**यदा। प्राणः। अभि+अवर्षीत्। वर्षेण। पृथिवीम्। महीम्॥**
**ओषधयः। प्र। जायन्ते। अथोइति। याः। काः। च। वीरुधः॥ १७॥**

**'ओषधयः प्र मोदन्ते'** इति पैप्पलादः पाठः।

पूर्वार्धमुक्तार्थम्। ओषधयः यवाद्याः वीरुधो लताद्याश्च प्रजायन्ते॥ १७॥



अथाष्टमो मन्त्रः–

**यस्तेप्राणेदंवेदयस्मिंश्चासिप्रतिष्ठितः।**
**सर्वेतस्मैबलिंहरानमुष्मिंल्लोकऽउत्तमे॥ १८॥**

**यः। ते। प्राण। इदम्। वेद। यस्मिन्। च। असि। प्रति+स्थितः॥**
**सर्वे। तस्मै। बलिम्। हरान्। अमुष्मिन्। लोके। उत्+तमे॥ १८॥**

**'एवा तस्मै बलिं हरान्'** इति पैप्पलादः पाठः।

यस्तव प्राणेदं माहात्म्यं वेद यस्मिंश्च त्वं प्रतिष्ठितः विशेषतः सन्निहितः तस्मै प्राणविदुषे सर्वे मुक्ता जीवा बलिं पूजां हरन्ति उत्तमे मोक्षाख्ये लोके॥ १८॥

अथ नवमो मन्त्रः–

**यथाप्राणबलिहृतस्तुभ्यंसर्वाःप्रजाइमाः।**
**एवातस्मैबलिंहरान्यस्त्वाशृणवत्सुश्रवः ॥ १९॥**

**यथा। प्राण। बलि+हृतः। तुभ्यम्। सर्वाः। प्र+जाः। इमाः॥**
**एव। तस्मै। बलिम्। हरान्। यः। त्वा। शृणवत्। सु+श्रवः॥ १९॥**

**'सर्वे अस्मै बलिं हरान् यस्त्वा शुश्राव सुश्रवाः'** इति पैप्पलादः पाठः।

हे सुश्रवः शोभनकीर्ते प्राण, यथा इमाः प्रजास्तुभ्यं बलिं हरन्ति एवमेव तस्मा अपि बलिं हरेयुर्यस्त्वा शृणुयात्। तव कीर्तिं श्रावयेदित्येतत्॥ १९॥

अथ दशमो मन्त्रः–

**अन्तर्गर्भश्चरतिदेवतास्वाभूतोभूतस्सऽउजायतेपुनः।**
**सभूतोभव्यम्भविष्यत्पितापुत्रम्प्रविवेशाशचीभिः ॥ २०॥**

अन्तः । गर्भः । चरति । देवतासु । आ+भूतः । भूतः । सः । ऊँइतिं ।
जायते । पुनः ॥ सः । भूतः । भव्यम् । भविष्यत् । पिता । पुत्रम् । प्र ।
विवेश । शचीभिः ॥ २० ॥

**'स भूतं भव्यं भुवनं भविष्यत् पिता'** इति पैप्पलादः पाठः ।

अन्तर्गर्भः सन् चरति । देवतासु आ भूतः आत्मभूतः । आधारभूतः । आ समन्ताद् भूतः । भूतः सदातनश्च सन् गर्भेषु सन्निविष्टः सन् पुनःपुनर्जायते । स भूतो भूतिमान् प्राण एव भूतं भव्यं भविष्यच्च । स जीवजातस्य पातृत्वात् पिता शचीभिः स्वरूपशक्तिभिः पुत्रभूतं जीवजातं प्रविवेश ।

अत्र प्रथमद्वितीयतुरीयास्त्रयः पादास्त्रैष्टुभाः । तृतीय आनुष्टुभ इत्यनुष्टुब्गर्भा त्रिष्टुप् छन्दः । पिङ्गलनाग एतां ज्योतिष्मतीं नाम त्रिष्टुभमाह– **'एकेन त्रिष्टुब् ज्योतिष्मती'** (३.५०) इति । **'चतुष्पदा त्रिष्टुबेकेन गायत्रेण पादेन स्वैश्च त्रिभिर्ज्योतिष्मती नाम भवति'** इति यादवप्रकाशः । पैप्पलादानां त्रिष्टुबेव ॥ २० ॥

**इति द्वितीयानुवाके पञ्चमं सूक्तम् ।**

—०—

अथ षष्ठे प्रथमो मन्त्रः–

**एकम्पादन्नोत्खिदतिसलिलाद्धंसऽउच्चरन् ।**
**यदङ्गसतमुत्खिदेन्नैवाद्यनश्वस्स्यान्नरात्रीनाहस्स्या-**
**न्नव्युच्छेत्कदाचन ॥ २१ ॥**

एकम् । पादम् । न । उत् । खिदति । सलिलात् । हंसः । उत्+चरन् ॥
यत् । अङ्ग । सः । तम् । उत्+खिदेत् । न । एव । अद्य । न । श्वः । स्यात् ।
न । रात्री । न । अहः । स्यात् । न । वि । उच्छेत् । कदा । चन ॥ २१ ॥

**'सलिलाद्धंस उत्पतन् । यदि सतमुत्खिदेत्..नाहः स्यान्न प्रज्ञातं तु किञ्चन'** इति पैप्पलादः पाठः ।



दोषान् जहाति साररूपश्चेति हंसः प्राणः । हन्ति गच्छति जीवमभिमानितया नियन्तुमिति च । हंस इव शुक्ल इति वा । परशुक्लत्रयेऽन्तर्भावात् । सलिलप्रधानादस्माच्छरीरात् । **'भूयस्त्वाच्चापाम्'** इति हि स्मरन्ति । प्राणात्मना उच्चरन् ऊर्ध्वं गच्छन् अपरमेकं पादं रूपमपानाख्यं नोत्खिदति न देहाद् बहिर्गमयति । अङ्ग हे प्राणोपासक, यदि तदपि रूपमुत्खिदेत् तदा प्राणस्यासन्निधानात् जीवनमेव न स्यात् । ततो मृतस्य काष्ठविष्ठासमस्य देहस्य नैवाद्य स्यात् । नापि श्वः स्यात् । नाहः स्यान्न रात्रिः । कदाचिदपि न व्युच्छेत् न प्रकाशोद्गमः स्यात् । सर्वोऽपि व्यवहारः प्राणायत्त इत्येतत् । **'उच्छी विवासे'** इति पठन्ति । 'विकासे च' इति पठनीयम् ।

मध्येज्योतिर्जगती च्छन्दः । **'मध्येज्योतिर्मध्यमेन'** (३.५३) इति पिङ्गलनागः । यद्यपि आद्यन्तयोर्द्वावष्टाक्षरौ पादौ मध्ये चैका जगती मध्येज्योतिरित्युच्यते । तथाहि हलायुधः– **'एकेन जागतेन मध्यमेन तृतीयेन, उभयतश्च द्वौद्वौ गायत्रौ तदा मध्येज्योतिर्नाम जगती भवति'** इति । यादवप्रकाशस्त्वन्यथा व्याचख्यौ– 'मध्यमेन गायत्रेणाभितः स्वैः पादैः मध्येज्योतिर्नाम जगती' इति । नेदमुभयमप्यत्र सङ्गतम् । अन्यैवात्र छन्दोगतिर्दृश्यते– आद्यास्त्रयः पादा अष्टाक्षराः । पञ्चमश्चान्त्योऽष्टाक्षरः । चतुर्थः पादो जागतः– **'नैवाद्य न श्वः स्यान्न रात्री नाहः स्यात्'** इति । पञ्चमचरणे 'वि+उच्छेत्' इति विश्लेषेणाष्टाक्षरत्वम् ॥ २१ ॥

अथ द्वितीयो मन्त्रः–

**अष्टाचक्रंवर्त्ततऽएकनेमिसहस्राक्षरम्प्रपुरोनिपश्चा ।**
**अर्द्धेनविश्वम्भुवनञ्जजानयदस्यार्द्धङ्कतमस्सकेतुः ॥ २२ ॥**

अष्टा+चक्रम् । वर्त्तते । एक+नेमि । सहस्र+अक्षरम् । प्र । पुरः । नि ।
पश्चा ॥ अर्द्धेन । विश्वम् । भुवनम् । जजान । यत् । अस्य । अर्द्धम् ।
कतमः । सः । केतुः ॥ २२ ॥

**'नि पश्चात्'** इति पैप्पलादः पाठः । क्वचित् शौनकीयेऽपि तथा । **'किमु तस्य केतुः'** इत्युत्तरार्धे ।

अष्टप्रकृतिचक्रमिदं शरीरम् । उक्तं हि भगवता– **'भिन्ना प्रकृतिरष्टधा'** इति । एकेन प्राणेन नेमिवदावृतं दृढीकृतं च । सहस्राण्यक्षराणि वाग्व्याहारा यत्र । सहस्रधा योनिषु अश्नोति व्याप्नोतीति वा । तदनेन नेमिभूतेन पुरः पूर्वं प्रवर्तते यदा प्राणः प्रवर्तयति । पश्चात् निवर्तते यदा प्राणो निवर्तयति । एवमयं प्राणः अर्द्धेन आ समन्तादर्द्धेन पूर्णेन स्वरूपेण समग्रं भुवनं जनयामास । यदस्यार्द्धं पूर्णं स्वरूपं तस्य केतुर्ज्ञाता कतमः? न कोऽपि । स्फुटमियं त्रिष्टुप् ॥ २२ ॥

अथ तृतीयो मन्त्रः–

**योऽअस्यविश्वजन्मनऽईशेविश्वस्यचेष्टतः ।**
**अन्येषुक्षिप्रधन्वनेतस्मैप्राणनमोऽस्तुते ॥ २३ ॥**

**यः । अस्य । विश्व+जन्मनः । ईशे । विश्वस्य । चेष्टतः ॥**
**अन्येषु । क्षिप्र+धन्वने । तस्मै । प्राण । नमः । अस्तु । ते ॥ २३ ॥**

**'ईशे सर्वस्य चेष्टतः'** इति पैप्पलादः पाठः ।

विश्वानि नानाविधानि जन्मानि यस्य । विश्वात् नारायणाज्जातस्य वा अस्य स्वकर्मानुगुणं चेष्टमानस्य विश्वस्य जीवजातस्य य ईष्टे , अन्येषु जडेषु च क्षिप्रमनायासेन धावते तस्मै प्राण नमोऽस्तु ते । स्फुटमनुष्टुप् ॥ २३ ॥

अथ चतुर्थो मन्त्रः–

**योऽअस्यसर्वजन्मनऽईशेसर्वस्यचेष्टतः ।**
**अतन्द्रोब्रह्मणाधीरःप्राणोमानुतिष्ठतु ॥ २४ ॥**

**यः । अस्य । सर्व+जन्मनः । ईशे । सर्वस्य । चेष्टतः ॥**
**अतन्द्रः । ब्रह्मणा । धीरः । प्राणः । मा । अनु । तिष्ठतु ॥ २४ ॥**

**'ईशे विश्वस्य चेष्टतः'** इति, **'प्राणो मामभिरक्षतु'** इति च पैप्पलादः पाठः ।



उक्तार्थं पूर्वार्धम् । तात्पर्यात् पुनर्वचनम् । सर्वः पूर्णो नारायणः । सर्वाणि च जन्मानि । अतन्द्रः श्रमालस्यादिरहितः । **'निःसीमपौरुषगुणस्य कुतः श्रमोऽस्य'** इति ह्यामनन्ति । धीरः धिया भगवत्प्रज्ञया रममाणः प्राणः परब्रह्मणा नारायणेन सह मामनुतिष्ठतु । अनुगृह्णानो भवत्विति । 'प्राणो मा+अनु तिष्ठतु' इति विश्लेषेण तुरीयचरणेऽप्यष्टाक्षरतेति केवलाऽनुष्टुप् ॥ २४ ॥

अथ पञ्चमो मन्त्रः–

**ऊर्ध्वस्सुप्तेषुजागारननुतिर्य्यङ्निपद्यते ।**
**नसुप्तमस्यसुप्तेष्वनुशुश्रावकश्चन ॥ २५ ॥**

**ऊर्ध्वः । सुप्तेषु । जागार । ननु । तिर्य्यङ् । नि । पद्यते ॥**
**न । सुप्तम् । अस्य । सुप्तेषु । अनु । शुश्राव । कः । चन ॥ २५ ॥**

**'ऊर्ध्वः स्वप्नेषु जागर'** इति पैप्पलादः पाठः । शौनकसंहितायामपि क्वचित् 'जागर' इत्येव पाठः ।

ऊर्ध्वः जीवोत्तमः प्राणः जीवेषु सुप्तेषु स्वयं जागर्ति नारायणेन सह । सुप्तं प्राणिजातं तिर्यक् स्थितं निपद्यते निद्रानिमग्नमधः शेते ननु । किन्तु अस्य प्राणस्य सुप्तिं न कोऽप्यनुशुश्राव सर्वेषु सुप्तेष्वपि । 'सुप्तेषु+अनुशुश्राव' इति विश्लेषेण केवलाऽनुष्टप् ॥ २५ ॥

अथ षष्ठो मन्त्रः–

**प्राणमामत्पर्य्यावृतोनमदन्योभविष्यसि ।**
**अपाम्गर्भमिवजीवसेप्राणबध्नामित्वामयि ॥ २६ ॥**

**प्राण । मा । मत् । परि+आवृतः । न । मत् । अन्यः । भविष्यसि ॥**
**अपाम् । गर्भम्+इव । जीवसे । प्राण । बध्नामि । त्वा । मयि ॥ २६ ॥**

**इति द्वितीयानुवाके षष्ठं सूक्तम्**
**इत्याथर्वणं प्राणसूक्तं समाप्तम्**

—०—

हे प्राण, त्वं मत् मत्तः पर्यावृतः पर्यावृत्तः पराङ्मुखो मा भूः । मत्तः अन्यः, सम्बन्धरहितः परकीयो न भविष्यसि । लोकेऽपि हि व्याहरन्ति–'एते वयं सम्बन्धिनः । अयमन्यः' इति । **'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः'** इति च बृहदारण्यके । प्राण, त्वां मयि दृढं बध्नामि जीवसे उज्जीवनाय अपां गर्भमग्निमिवेति । तृतीयः पादो नवाक्षर इति बृहतीगर्भेयमनुष्टबित्याहुः । भुरिगनुष्टुब् वा ॥

**इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।**
**वितेने विमलां टीकां विनेयजनवाञ्छया ॥**

**इत्याचार्यगोविन्दस्य कृतिष्वाथर्वणस्य प्राणसूक्तस्य भाष्यं समाप्तम्**

—०—



# तारतम्यमीमांसा

**नत्वा नारायणं देवं मध्वं मूलगुरुं तथा ।**
**प्रणीयते तारतम्यमीमांसा हरितुष्टये ॥**

विष्णोः सर्वोत्तमत्वं वायोश्च जीवोत्तमत्वं न सम्यगवगम्यते विना तारतम्यमीमांसाम् । विष्णुभक्तिश्च सर्वाधिका न देवतासु परिवारभूतासु तारतम्यपरिज्ञप्तिं विना शक्यमनुसन्धातुम् । तत इयं तारतम्यमीमांसा प्रस्तूयते–

१. परमपुरुषो नारायणः । गुणतो देशतः कालतः शक्तितश्चानन्तः ।

**[मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ।**
**कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः ॥**

**पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा ।**
**यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः ॥**

**नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च ।**
**एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः ॥]**

२. परा प्रकृतिर्लक्ष्मीः । नारायणादनन्तांशावरा ।

**[श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा ।**
**सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता ॥]**

३. हिरण्यगर्भः । मुख्यप्राणश्च । लक्ष्म्याः कोटिगुणावरौ ।

**[प्राणः सूत्रं महान् ब्रह्मा चित्तं वायुर्बलं धृतिः ।**
**स्थितिर्योगश्च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ॥**

**मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः।**
**ऋजुः सुमानो विज्ञाता महाध्याता महागुरुः॥**

**हनूमान् भीम आनन्द इत्यादिबहुरूपिणः।**
**हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते॥]**

४. हिरण्यगर्भपत्नी सरस्वती। मुख्यप्राणपत्नी भारती च। ब्रह्मवायुभ्यां शतगुणावरे।

**[सरस्वती च गायत्री श्रद्धाऽऽद्या प्रीतिरेव च।**
**सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका॥**

**गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः।**
**शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा।**
**चन्द्रेत्यादिस्वरूपा यास्तेभ्यः शतगुणावराः॥]**

५. गरुडः। शेषः। रुद्रश्च [एकादशरुद्रेषु यः प्रधानः]। सरस्वतीभारतीभ्यां शतगुणावराः।

**[शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च।**
**नरोऽवटो लक्ष्मणश्च रौहिणेयः शुकस्तथा॥**

**सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि।**
**दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकः॥]**

६. विष्णोः कृष्णावतारे षण्महिष्यो नीला,भद्रा, मित्रविन्दा, कालिन्दी, लक्षणा, जाम्बवती च। [आसु जाम्बवती प्रधाना। लक्ष्म्या विशेषा-वेशदशायां शेषतुल्या।] गरुडशेषरुद्रेभ्यः पञ्चगुणावराः।

७. गरुडपत्नी सुपर्णी। शेषपत्नी वारुणी। रुद्रपत्नी पार्वती च। गरुडशेषरुद्रेभ्यो दशगुणावराः।



८. पुरन्दरः। कामश्च। सुपर्णीवारुणीपार्वतीभ्यो दशगुणावराः।

**[वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः।**
**सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च।**
**सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः॥]**

९.शरीरमानी अहम्प्राणः [४९मरुत्सु प्रधानः]। पुरन्दरकामाभ्यां दश-गुणावरः।

१०. पुरन्दरपत्नी शची। कामपत्नी रतिः। कामपुत्रोऽनिरुद्धः। बृहस्पतिः। स्वायम्भुवमनुः। दक्षप्रजापतिश्च। अहम्प्राणाद् दशगुणावराः।

११. स्पर्शमानी प्रवहः [४९ मरुत्सु द्वितीयः]। अनिरुद्धादिभिः पञ्च-गुणावरः।

१२. चन्द्रः। सूर्यः। सूर्यपुत्रो यमः। स्वायम्भुवमनुपत्नी शतरूपा च। [द्वादशस्वादित्येषु सूर्यस्तृतीयः। तत्र प्रथमो विष्णुर्वामनोऽदित्यां जातः। इन्द्रानुजतया जात इति तमुपेन्द्रमाचक्षते। द्वितीयोऽष्टमकक्ष्यागतः पुरन्दराख्य इन्द्रोऽदित्यां पूर्वजातः।] एते प्रवहाद् द्विगुणावराः। अनि-रुद्धादिभ्यो दशगुणावराः।

१३. वरुणः [द्वादशस्वादित्येषु चतुर्थः]।

१४. नारदः।

१५. अग्निः [अष्टवसुषु प्रधानः]। वरुणपुत्रो भृगुमुनिः। दक्षप्रजापतिपत्नी स्वायम्भुवमनुपुत्री प्रसूतिश्च। एते चन्द्रादिभ्यो दशगुणावराः।

१६. वैवस्वतमनुः। विश्वामित्रः। महर्षयः सप्त पूर्वे– मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चेति।

१७. मित्रः [द्वादशस्वादित्येषु पञ्चमः] । निरृतिः । बृहस्पतिपत्नी तारा । प्रवहवायुपत्नी प्रावही च ।

१८. विघ्नाधिपतिर्गणपतिर्भूताकाशमानी । धनपतिः कुबेरः । वायुजो विष्व-क्सेनः । सूर्यजावश्विनौ नासत्यदस्रौ नाम । प्रधानवसुमग्निमृते सप्तान्ये वसवः–द्रोणः, प्राणः, ध्रुवः, अर्कः, दोषः, वस्तुः, विभावसुश्चेति । [वसूनामपि नामान्तराणि पठ्यन्ते । वस्तुरेव द्युवसुः, यो भीष्मो बभूव ।] उक्तान् पञ्च वक्ष्यमाणं चैकं विहाय षडादित्याः– अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता चेति । [आदित्यानामपि बहुधा नामानि पठ्यन्तेऽन्यान्यग्रन्थेषु । बहुनामानो हि देवाः ।] दश विश्वेदेवाः– क्रतुः, दक्षः, सवः, सत्यः, कामः, कालः, धुरिः, लोचनः, पुरूरवः, आर्द्रवश्चेति । एकादशसु रुद्रेषु प्रधानं विहायान्ये दश– रैवतः, ओजः, भवः, भीमः, वामः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुध्निः, विरूपाक्षश्चेति । [रुद्राणामपि नामान्तराण्यन्यत्र पठ्यन्ते]। एकोनपञ्चाशन्मरुत्सु अहम्प्राणं प्रवहं च विहायावशिष्टाः ४७ मरुतः– प्राणापानव्यानोदानसमानाः, नागकूर्मकृकळदेवदत्तधनञ्जयाः, आवहोद्वहपरावहविवहसंवहाः, शम्भुः, शङ्कुः, कलः, श्वासः, अनलः, अनिलः, प्रतिभः, कुमुदः, कान्तः, शुचिः, श्वेतः, अजितः, गुरुः, सञ्ज्ञः, प्रवर्तकः, कालः, दक्षः, सोम्यः, कपिः, जडः, मण्डूकः, सन्ततः, सिद्धः, रक्तः, कृष्णः, पिकः, शुकः, यतिः, भीमः, हनुः, पिङ्गः, कम्पनश्चेति । [मरुतां बहुविधानि नामानि पठ्यन्ते । नैकत्राप्येकरूपता । तत्रायमेकः प्रकारः प्रतनैरुद्धृतः] । पितृपतिष्वेकः कव्यवाहनामाऽग्निः । [त्रिषु प्रधानपितृपतिषु द्वौ यमसोमौ द्वादशकक्ष्यायां गतौ] । ऋभवस्त्रयः– ऋभुः, विभ्वा, वाजश्चेति । द्यावापृथिवीमानिन्यौ च देव्यौ ।



१९. प्रधानवायुपुत्रो भूतवायुमानी मरीचिः[1] । प्रधानाग्निपुत्रो भूताग्निमानी पावकः । पादमानिनाविन्द्रपुत्रौ यज्ञनामा जयन्तः, शम्भुश्च । दैत्यगुरुः शुक्रः । तत्सोदरश्च्यवनः । बृहस्पतिसोदर उचथ्यः । उक्तं सनत्कुमारं विहायान्ये त्रयो ब्रह्मणो मानसपुत्रा ऋषयः– सनकः, सनन्दनः, सनातनश्च । सप्त चान्य ऊर्ध्वरेतसः । एतान् दश, पूर्वोक्तान् सनत्कुमारादींश्च दश विहायान्ये काश्यपाद्या अशीतिर्गृहस्था ऋषयः । भाविमन्वन्तराणामिन्द्राः सप्त– बलिः, अद्भुतः, शम्भुः, विधृतिः, ऋतधामा, दिवस्पतिः, शुचिश्च । [अतीतेषु मन्वन्तरेषु प्रथमे स्वायम्भुवेऽन्तरे यज्ञनामा विष्णुरेवेन्द्रः । द्वितीये स्वारोचिषे रोचननामा वायुः । तृतीये चौत्तमे सत्यजिन्नामा यम इन्द्रः । चतुर्थे तापसे पञ्चमे च रैवते त्रिशिखविभुनामानौ नासत्यदस्रावश्विना-विन्द्रौ । षष्ठे चाक्षुषे मन्द्रद्युम्नः, स एव च सप्तमे वैवस्वतेऽन्तरे पुरन्दरनामेन्द्रः । तमेतमष्टमकक्ष्यागतमिन्द्रमाचक्षते ।] त्रीनुक्तान् विहायावशिष्टा एकादश मनवः– स्वारोचिषः, उत्तमः, रैवतः, चाक्षुषः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, देवसावर्णिः, इन्द्रसावर्णिश्चेति । [प्रथमः स्वायम्भुवो मनुर्दशमकक्ष्यायां गतः । चतुर्थस्तापसो मनुः स्वयं विष्णुरेव । सप्तमो वैवस्वतः षोडश्यां कक्ष्यायां गतः । अपरे त्वेकादशात्र ।] दशसु पितृपतिषु पूर्वोक्तान् यमसोमकव्यवाहान् विहायान्ये सप्त । अष्टौ विष्णोर्द्वारपालकाः– जयः, विजयः, चण्डः, प्रचण्डः, नन्दः, सुनन्दः, कुमुदः, कुमुदेक्षण-श्चेति । अष्टौ प्रधानगन्धर्वाः । अष्टौ प्रधानाप्सरसः । विश्वकर्मा ।

१. मरीचिं पूर्वे विद्वांस एकान्नविंश्यां कक्ष्यायां पठन्ति । अयं भूतवायुमानीति गीतातात्पर्ये स्थितम् । आकाशमानी भूतवायुमानी च समानाविति चैतरेयभाष्यादवगम्यते । तेन मरीचिरेकान्नविंश्यां पठितेषु प्रधानः, अष्टादश्यां कक्ष्यायां पठिताद् गणपतेः किञ्चिन्न्यूनः । प्रायस्तत्समान इति ज्ञायते ।

चित्रगुप्तः । सूर्यसारथिररुणः । नन्दी । ऐरावतः । सुरभिः । कल्पवृक्षादिदेवताः । अहोरात्रदेवते । पूर्णिमामावास्यादेवते । अभिजिद्विषुवद्देवते । ओषधिवनस्पत्यभिमानिनः । हविःकपालाद्यभिमानिनश्च । कर्मणा देवत्वं गताः शतं राजर्षयश्च– पृथुः, कार्तवीर्यः, शशबिन्दुः, प्रियव्रतः, उत्तानपादः, मान्धाता, गयः, ककुत्स्थः, नहुषः, अम्बरीषः, आर्षभो भरतः, दौःषन्तिर्भरतः, मरुत्तः, हरिश्चन्द्रः, प्रह्लादः, परीक्षिदाद्याश्च । त एतेऽग्नेः शतगुणावराः ।

२०. द्वादशादित्येषु चरमः पर्जन्यः । अनिरुद्धभार्या उषा विराडाख्या । चन्द्रभार्या रोहिणी । सूर्यभार्या सञ्ज्ञा । यमभार्या श्यामळा । वरुणभार्या च गङ्गा । एकान्नविंशकक्ष्यापठितेभ्यो मरीच्यादिभ्यो द्विगुणावराः ।

२१. उक्तवक्ष्यमाणेभ्योऽन्ये अनाख्याताः देवाः । [केचिन्नैतां कक्ष्यां परिगणयन्ति] ।

२२. अग्निभार्या वाङ्मानिनी स्वाहा । एकान्नविंशकक्ष्यापठितेभ्यः पञ्चगुणावरा ।

२३. जलमानी बुधः । स्वाहातो द्विगुणावरः ।

२४. अश्विभार्या नाममानिनी उषाः । स्वाहातो दशगुणावरा ।

२५. कुजः[१] ।

२६. पृथिवीमानी सूर्यतनयः शनिः ।

२७. कर्ममानी वरुणपुत्रः पुष्करः ।

२८. काश्यपभार्याऽदितिः, या देवकी बभूव । द्रोणाख्यवसुभार्या धरा, या यशोदा बभूव ।

१. अयमप्येकोनविंश्यां कक्ष्यायां पठनीय इत्येके ।



२९. कृष्णपत्नीत्वेन जाता अग्निपुत्राः १६,१०० सङ्ख्याकाः । आसु त्वष्टृपुत्री कशेरुः किञ्चिदधिका ।

३०. अनाख्याता आजानजा देवाः । शतं गन्धर्वाः । शतमप्सरसः । [शतं कोटीनामृषयः सन्ति । तत्र पूर्वोक्तमृषीणां शतकं विहायावशिष्टाः] ९९,९९,९९,९०० ऋषयः । एकान्नविंशकक्ष्यापठितेभ्यः कर्मदेवेभ्यः शतगुणावराः ।

३१. पूर्वोक्तानां सप्तानां पितृपतीनां सन्ततिभूताश्चिरपितरः । आजानदेवेभ्यः शतगुणावराः ।

३२. पूर्वोक्तं गन्धर्वाणामप्सरसां च शतमष्टोत्तरं विहायावशिष्टा गन्धर्वा अप्सरसश्च । चिरपितृभ्यः शतगुणावराः ।

३३. मनुष्यगन्धर्वाः । गन्धर्वेभ्यः शतगुणावराः ।

३४. चक्रवर्तिनः । मनुष्यगन्धर्वेभ्यः शतगुणावराः ।

३५. नरोत्तमाश्चतुर्वर्णगताः । चक्रवर्तिभ्यः शतगुणावराः ।

***

एतेषु च विशिष्योपनिषदुक्ता नामादिमारुतान्ता यथा–

| | | | | | |
|---|---|---|---|---|---|
| १. | नाममानिनी उषाः | [२४] | ८. | बलमानी प्रवहः | [११] |
| २. | वाङ्मानिनी स्वाहा | [२२] | ९. | अन्नमानी अनिरुद्धः | [१०] |
| ३. | मनोमानी पर्जन्यः | [२०] | १०. | अम्मानी अहम्प्राणः | [९] |
| ४. | सङ्कल्पमानी मित्रः | [१७] | ११. | तेजोमानी पुरन्दरः | [८] |
| ५. | चित्तमानी अग्निः | [१५] | १२. | आकाशमानिनी उमा | [७] |
| ६. | ध्यानमानी वरुणः | [१३] | १३. | स्थिरस्मृतिमानी शिवः | [५] |
| ७. | विज्ञानमानी चन्द्रः | [१२] | १४. | आशामानिनी भारती | [४] |

१५. जीवमानी मुख्यप्राणः [३]

[बलमिति ज्ञानबलं देहबलं च । तदुभयमानी भूतवायुः । अन्नमिति ज्ञानरतिरूपं ज्ञानान्नं बाह्यमन्नं च । तदुभयमानी अनिरुद्धः । आप इति ज्ञानतृप्तिर्बाह्यजलं च । तदुभयमानी अहम्प्राणः । तेज इति मानसं प्रतिभानं बाह्यं च । तदुभयमानी पुरन्दरः । आकाश इति स्थिरा प्रतिभा भूता-काशश्च । तदुभयमानिन्युमा । ततः स्थिरस्मृतिमानी शिवः । तत आशाया अपरोक्षानन्दस्य मानिन्यौ सरस्वतीभारत्यौ । ततश्च जीवकलामानी मोक्षानन्दमानी च प्राणात्मा हिरण्यगर्भ इति ।]

तथाहि श्रुतिः– **'अथातः सम्भूतिः । परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात् तैजसप्राणस्तैजसप्राणाद-निरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते'** इति ।

**इमामाचार्यगोविन्दश्चक्रे चक्रायुधप्रियाम् ।**
**तारतम्यस्य मीमांसां विनेयजनवाञ्छया ॥**

**इत्याचार्यगोविन्दस्य कृतिषु तारतम्यमीमांसा समाप्ता**

—०—